ओ३म्

# सामवेदसंहिता

प्रधान-सम्पादकः

डॉ० धर्मेन्द्रकुमारः

सह-सम्पादकः

प्रद्युम्नचन्द्रः

दिल्ली संस्कृत अकादमी

( राष्ट्रिय राजधानी क्षेत्रम्, दिल्ली सर्वकारः )

( २०१३-२०१४ )

*प्रकाशकः* : सचिवः, **दिल्ली-संस्कृत-अकादमी**
(राष्ट्रिय-राजधानी-क्षेत्रम्, दिल्लीसर्वकारः)

***ISBN*** : 978-81-925829-8-6

*प्रथम-संस्करणम्* : ईस्वी सन् २०१३ (१००० प्रतयः)

*मूल्यम्* : २५० रूप्यकाणि

*प्राप्तिस्थानम्* : प्रकाशन-विभागः
**दिल्ली-संस्कृत-अकादमी**
(राष्ट्रिय-राजधानी-क्षेत्रम्, दिल्लीसर्वकारः)
प्लॉट सं०-५, झण्डेवालानम्, करोलबागोपनगरम्,
नवदेहली-११०००५
*दूरभाष* : ०११-२३६३५५९२, २३६८१८३५,
२३५५५६७६
*अनुप्रेस* : delhisanskritacademy@gmail.com

*मुद्रकः* : **डॉलफिनप्रिंटोग्राफिक्सः**
४ई/७, पाबला बिल्डिंगः, झण्डेवालानविस्तारः,
नवदेहली-११००५५
दूरभाष : ०११-२३५९३५४१

# सम्पादकीयम्

वेदशब्दस्य कोऽर्थ: इति जिज्ञासायामुच्यते—"**विद्यन्ते ज्ञायन्ते लभ्यन्ते वा एभिर्धर्मादिपुरुषार्थाः इति वेदाः**"।"**अपौरुषेयं वाक्यं वेदः**" इति सायणीयऋग्भाष्ये। सायणीयकृष्णयजुर्वेदीयभाष्य–भूमिकायाम्—इष्ट प्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं यो वेदयति स वेद:। तत्रैव सायणेन प्रतिपादितम्—

**प्रत्यक्षेणानुमित्या वा यस्तूपायो न विद्यते।**
**एतं विदन्ति वेदेन तस्माद्वेदस्य वेदता॥**

आधुनिकभाष्यकारेण श्री स्वामिना दयानन्देन वेदशब्दस्य व्युत्पत्ति: एवम्प्रकारेण कृता—विदन्ति जानन्ति, विद्यन्ते, भवन्ति, विन्दन्ति। सर्वा सत्यविद्यायैर्येषु वा स वेद:। तदेवं विधानां सर्वेषामपि व्युत्पादनानां तात्पर्यविषयीभूतोऽर्थ: समान एव। एवं सम्यक्तयाऽनुशीलनेन सुतरामिदं विज्ञातम् भवति यद् वेदो हि नामाशेषविशेषज्ञानविज्ञानप्रतिपादकं शाश्वतिकमपौरुषेयं शास्त्रम्।

सोऽयं वेद: त्रयीति पदेनापि परिभाष्यते वस्तुतो वेदरचनायास्त्रैविध्यमेव वेदानां त्रयीत्वे बीजम्। या खलु रचना पद्यमयी सा ऋगुच्यते, या गद्यमयी सा यजु:, या च पुनर्गानमयी सा सामेति। तदाहु: भगवज्जैमिनिमुनिपादा: तेषामृग्यत्रार्थवशेन पादव्यवस्था। गीतिषु सामाख्या, शेषे यजु शब्द: इति मीमांसायाम्—(२.१.३२.३३.३४)।

सामवेद: संगीतकाण्डपर:। अत्र चत्वारो वेदविषया सन्ति विज्ञानकर्मोपासनाज्ञानकाण्डभेदाच्चत्वारो वेदविभागा इति। तत्रादिमो विज्ञानमयो हि सर्वेभ्यो मुख्योऽस्ति, तस्य परमेश्वरादारभ्य तृणपर्यन्तपदार्थेषु साक्षाद् बोधान्वयत्वात्। तत्रापीश्वरानुभवो मुख्योऽस्ति। कुत:? अत्रैव सर्वेषां वेदानां तात्पर्यमस्तीश्वरस्य खलु सर्वेभ्य: पदार्थेभ्य: प्रधानत्वात् इति दयानन्दीयऋग्भाष्यभूमिकाया: वेदविषयविचारप्रसङ्गे।

एवमेव महर्षिणा दयानन्देन ऋग्भाष्यभूमिकाया: प्रश्नोत्तरविषये न्यगादि—

ऋग्वेदे सर्वेषां पदार्थानां गुणप्रकाश: कृतोऽस्ति, तथा यजुर्वेदे विदितगुणानां पदार्थानां सकाशात् क्रिययाऽनेक विद्योपकारग्रहणाय विधानं कृतमस्ति, तथा सामवेदे ज्ञानक्रियाविद्ययोर्दीर्घविचारेण फलावधिपर्यन्तं विद्याविचार:। एवमथर्ववेदेऽपि त्रयाणां वेदानां मध्ये यो विद्याफलविचारो विहितोऽस्ति तस्य पूर्तिकरणेन रक्षणोन्नति विहिते स्त:। तथा ज्ञानकर्मकाण्डयोरूपासनायाश्च कियत्युन्नतिर्भवितुमर्हति किञ्चैतेषां फलं भवति, सामवेद एतद्विधायकत्वात् तृतीयो गण्यत इति महर्षिणा प्रतिपादितम्।

'**सातिभ्यां मनिनमनिणौ**' उणादि० ४.१५४ सूत्रानुसारेण धात्वर्थस्य संगति एवम्प्रकारेण बोध्या स्यति समापयति पापम् अशान्तिं दु:खादिकं च यत् तत् साम। षो अन्तकर्मणि अनेकार्थकत्वाद् गाने वर्तते, सीयते गीयते इति साम वेद:।

'सा' अथ च 'अम' इत्यनयोर्योगेन निष्पन्नोऽयं सामशब्द:। अमोऽहमस्मि सा त्वम् (अथर्ववेदे १४.२.७२) इति मन्त्रोऽस्ति। अत्र वैवाहिकप्रसङ्गावसरे वर: वधूमाचष्टे त्वम् 'सा' असि, अहम् अमोऽस्मि। सा इति कथनेन वागुच्यते अम इति कथनेन प्राणबल: इति अभिप्रेतोऽस्ति। यथा हि वाक्प्राणयोर्सम्मिलनेन सामसंगीतमुत्पद्यते तथाहि वधूवरयो सम्मिलनेनापि गृहस्थसंगीतमुत्पद्यते।

अतएव जैमिनीयुपनिषत्ब्राह्मणे न्यगदितम्—'प्राणो वाव अमो वाक् सा, तत् साम' ४.११.२.३। 'वागेव सा प्राणोऽमः तत्साम' इति छान्दोग्योपनिषदि प्रपा० १ खण्ड ७ इति।

एवमेव शतपथब्राह्मणे—'सा च अमश्चेति तत् साम्नः सामत्वम्' १.४.४.१.२४। काठकसंहितायामपि—'सा त्वमसि अमोऽहम्, अमोऽहमस्मि सा त्वम् ३५.१८। जैमिनीयुपनिषत् ब्राह्मणेऽपि'—तद्यत् सा च अमश्च तत् सामाऽभवत् तत्साम्नः सामत्वम्।

एवं तात्त्विकदृशा विमृश्यमाने सुतरां प्रतिफलितं भवति यत् 'सा' अथ च अम इत्यनयोर्योगेन सामशब्दस्य व्युत्पतिः कृताऽस्ति।

सामवेदेऽस्मिन् नवीनाः सामसम्बन्धिनो मन्त्रास्तु (७५) संख्याकाः। अन्ये सर्वेऽपि ऋग्वेदादुपात्ताः। ते च प्रायेनाष्टकमण्डलान्नवममण्डलाच्च संगृहीताः। एवं सर्वेऽपि मिलित्वा १८७५ मन्त्रा सन्ति।

सामवेदोऽयं पूर्वार्चिकोत्तरार्चिकेति विभागद्वयविभक्तः। तत्र पूर्वार्चिकम् आग्नेय-ऐन्द्र-पवमान-आरण्यकपर्वसु विभक्तम्। उत्तरार्चिकन्तु पुनः दशरात्र-संवत्सर-एकाह-अहीन-सत्र-प्रायश्चित-क्षुद्रेषु विभक्तम्।

''गीतिषु सामाख्या'' अतः गानसंवलितैर्मन्त्रैः यज्ञयागादिषु उद्गातृभिर्गीयमानत्वात् एष सामवेद उच्यते। सामगायकाः, सामगाश्छन्दोगाश्चाप्युच्यन्ते। यद्यपि सामगानविधिः सामान्यसंगीत शास्त्रतः किञ्चित्विलक्षणस्तथापि षड्ज-ऋषभ-गान्धार-मध्यम-पञ्चम-धैवत-निषादाख्यानां सप्तस्वराणां प्रयोगस्तु सामगाने भवत्येव। अत्र सामगाने सप्तस्वराणां प्रयोगः अतीव रमणीयतया कृतोऽवलोक्यते। अतएवगीतिसंवलितैर्मन्त्रैरुद्गातृभिर्गीयमानत्वादसौ सामवेद इत्यन्वर्थसंज्ञामलभत।

सामवेदे स्वराङ्कनप्रकारे तु स्वरस्योच्चैस्त्वाद्यवस्था विशेषव्यक्तीकरणार्थं—१.२.३ इत्येते अङ्काः प्रयुज्यन्ते। तत्रैकाङ्केन निर्दिश्यमानः स्वर-उदात्तः। द्वयंकेनानुदात्तस्त्र्यंकेन च स्वरितो ज्ञेयः इति दिक्।

सामवेदस्य शाखाविषये पस्पशायां पातञ्जलमहाभाष्यानुसारम्—'सहस्रवर्त्मा सामवेदः' इति प्रसिद्धिः, परमिदानीं ता नोपलभ्यन्ते तासां विलोपापत्तिरेवानुमीयते। चरणव्यूहस्य टीकायां महीदासेनापि स्वीकृतम् आसां षोडशशाखानां मध्ये तिस्रः शाखा विद्यन्ते, गुर्जरदेशे कौथुमी प्रसिद्धा, कर्णाटके जैमिनीयाप्रसिद्धा, महाराष्ट्रे तु राणायनीया इति तासु राणायनीयशाखा तु सायणकृतभाष्योपेताऽद्याप्युपलभ्यते।

वेदेषु वर्णितानां सर्वासां देवतानां मध्ये परमात्मन एव मुख्यं देवतात्वम्। महाभागाद्देवताया एक एवात्मा बहुधा स्तूयते। एकस्यात्मनोऽन्ये देवा प्रत्यङ्गानि भवन्ति। (निरुक्त ७.४.८.९)। तस्मादस्मिन् सामवेदे तस्यैवाद्वितीयस्य सर्वशक्तिमत परमात्मन एव बहुधाऽग्न्यादिनाम्नोपासना विहिता। तद्यथाः—

२ ३ १ २ ३ १ २ ३ २ ३ १ २
**अग्न आ याहि वीतये गृणानो हव्यदातये।**
१ २र ३ १ २
**नि होता सत्सि बर्हिषि॥** —सामवेद १.१

हे अग्ने! सर्वाग्रणीः, सर्वज्ञ, सर्वव्यापक, सर्वसुखप्रापक, सर्वप्रकाशमय, परमात्मन्! गृणानः कर्तव्यानि उपदिशन् वीतये-अस्माकं प्रगतये, अस्माकं विचारेषु कर्मसु च व्याप्तये, हृदयेषु सद्गुणानां प्रजननाय, अस्मासु स्नेहितुम्, कामक्रोधादीनां च बहिःप्रक्षेपणाय हव्यदातये—होतुं दातुं योग्यं द्रव्यं हव्यं सद्बुद्धि-सत्कर्मसत्धर्म-सद्धनादिकं तस्य दातये दानाय च। आ याहि-आगच्छ। होता शक्त्यादिप्रदाता दौर्बल्यादिहर्ता च सन् बर्हिषि-हृदयान्तरिक्षे नि सत्सि-निषीद।

वेदचतुष्टयत्वस्य निर्देशोऽपि सामवेदे उपलभ्यते। तथाहि—

३ १ २ ३ १ २ ३ १ २ ३ १ २
**पाहि नो अग्न एकया पाह्यू३त द्वितीयया।**

३ २ ३ २ ३ १ २ ३ १ २ ३ १ २
**पाहि गीर्भिस्तिसृभिरूर्जां पते पाहि चतसृभिर्वसो॥** —साम० ३६.२

हे ऊर्जां पते–अन्नानां रसानां बलानां प्राणानां चाधिपते! वसो–वसति सर्वत्र वासयति वेतु वसुः तादृश सर्वान्तर्यामिन् सर्वनिवासप्रद अग्ने परमात्मन्! त्वम् नः अस्मान् एकया ऋग्रूपया गिरा पाहि–रक्ष, उत–अपि च द्वितीयया–यजुराख्यया गिरा पाहि रक्ष। तिसृभिः ऋग्यजुःसामात्मिकाभिः सम्मिलिताभिः ऋग्यजुः–सामाथर्वरूपाभि सम्मिलिताभिः गीर्भिवाग्भिः पाहि–रक्ष। अत्र चतुःकृत्व 'पाहि' इति पाठात् परमेश्वरेण करणीयाया रक्षायाः सातत्यं द्योत्यते॥

अथ परमात्मानं नमस्करोतिः —

१ २ ३ १ २ ३ १ २ ३ २ ३ २
**उप त्वाग्ने दिवेदिवे दोषावस्तर्धिया वयम्।**

२ ३ १२ ३ १ २
**नमो भरन्त एमसि॥** —साम० १४

हे दोषावस्तः मोहरात्रिनिवारक! अग्ने प्रकाशमय परमात्मन्! वयम् उपासकाः, दिवेदिवे ज्ञानस्य प्रकाशाय प्रकाशाय। धिया ध्यानेन प्रज्ञया कर्मणा वा नमः नम्रत्वम् भरन्तः धारयन्तः त्वा त्वाम् उप एमसि–उपास्महे॥

एवं प्रायशः सामवेदे उपासनात्मका मन्त्रा दृश्यन्ते, योगसरणिनिर्देशपरा आध्यात्मिकोपदेशनिर्देशकाश्च समुपलभ्यन्ते भूयांसः।

तदेतावता स्फुटमिदं प्रतिभाति यद वेदान्तरवत् सामवेदस्यापि निरतिशयमहनीयं पदं वरीवर्ति, इत्यलं पल्लवितेन।

**—डॉ० धर्मेन्द्रकुमारः**
सचिवः, दिल्ली–संस्कृत–अकादमी

ओ३म्

# सामवेद–संहिता

## पूर्वार्चिकः

## अथ आग्नेयं काण्डम्

### अथ प्रथमोऽध्यायः

### प्रथमप्रपाठकस्य प्रथमोऽर्धः

#### प्रथमा दशतिः

ऋषिः—१, २, ४, ७, ९ भरद्वाजः; ३ मेधातिथिः; ५ उशनाः; ६ सुदीतिपुरुमीढौ तयोर्वान्यतरः; ८ वत्सः; १० वामदेवः॥ देवता—अग्निः॥ छन्दः—गायत्री; २ शङ्कुमती पिपीलिकामध्या–गायत्री; ५ विराड्गायत्री॥ स्वरः—षड्जः॥

१. अग्न आ याहि वीतये गृणानो हव्यदातये। नि होता सत्सि बर्हिषि॥ १॥

२. त्वमग्ने यज्ञानां होता विश्वेषां हितः। देवेभिर्मानुषे जने॥ २॥

३. अग्निं दूतं वृणीमहे होतारं विश्ववेदसम्। अस्य यज्ञस्य सुक्रतुम्॥ ३॥

४. अग्निर्वृत्राणि जङ्घनद् द्रविणस्युर्विपन्यया। समिद्धः शुक्र आहुतः॥ ४॥

५. प्रेष्ठं वो अतिथिं स्तुषे मित्रमिव प्रियम्। अग्ने रथं न वेद्यम्॥ ५॥

६. त्वं नो अग्ने महोभिः पाहि विश्वस्या अरातेः। उत द्विषो मर्त्यस्य॥ ६॥

७. एह्यू षु ब्रवाणि तेऽग्न इत्थेतरा गिरः। एभिर्वर्धास इन्दुभिः॥ ७॥

८. आ ते वत्सो मनो यमत् परमाच्चित् सधस्थात्। अग्ने त्वां कामये गिरा॥ ८॥

९. त्वामग्ने पुष्करादध्यथर्वा निरमन्थत। मूर्ध्नो विश्वस्य वाघतः॥ ९॥

१०. अग्ने विवस्वदा भरास्मभ्यमूतये महे। देवो ह्यसि नो दृशे॥ १०॥

## द्वितीया दशतिः

ऋषिः—१ आयुङ्क्ष्वाहिः; २ वामदेवः; ३, ८, ९ प्रयोगः; ४ मधुच्छन्दाः; ५, ७ शुनःशेपः; ६ मेधातिथिः; १० वत्सः॥ देवता—अग्निः॥ छन्दः—गायत्री॥ स्वरः—षड्जः॥

११. नमस्ते अग्न ओजसे गृणन्ति देव कृष्टयः। अमैरमित्रमर्दय॥ १॥

१२. दूतं वो विश्ववेदसं हव्यवाहममर्त्यम्। यजिष्ठमृञ्जसे गिरा॥ २॥

१३. उप त्वा जामयो गिरो देदिशतीर्हविष्कृतः। वायोरनीके अस्थिरन्॥ ३॥

१४. उप त्वाग्ने दिवेदिवे दोषावस्तर्धिया वयम्। नमो भरन्त एमसि॥ ४॥

१५. जराबोध तद्विविड्ढि विशेविशे यज्ञियाय। स्तोमं रुद्राय दृशीकम्॥ ५॥

१६. प्रति त्यं चारुमध्वरं गोपीथाय प्र हूयसे। मरुद्भिरग्न आ गहि॥ ६॥

१७. अश्वं न त्वा वारवन्तं वन्दध्या अग्निं नमोभिः। सम्राजन्तमध्वराणाम्॥ ७॥

१८. और्वभृगुवच्छुचिमप्नवानवदा हुवे। अग्निं समुद्रवाससम् ॥ ८॥

१९. अग्निमिन्धानो मनसा धियं सचेत मर्त्यः। अग्निमिन्धे विवस्वभिः॥ ९॥

२०. आदित्प्रत्नस्य रेतसो ज्योतिः पश्यन्ति वासरम्। परो यदिध्यते दिवि॥ १०॥

## तृतीया दशतिः

ऋषिः—१ प्रयोगः; २, ५ भरद्वाजः; ३, १० वामदेवः; ४, ६ वसिष्ठः; ७ विरूपः; ८ शुनःशेपः; ९ गोपवनः; ११ प्रस्कण्वः; १२ मेधातिथिः; १३ सिन्धुद्वीप आम्बरीषः, त्रित आप्त्यो वा; १४ उशनाः॥ देवता—अग्निः॥ छन्दः—१ विराड्गायत्री; २-१४ गायत्री॥ स्वरः—षड्जः॥

२१. अग्निं वो वृधन्तमध्वराणां पुरूतमम्। अच्छा नप्त्रे सहस्वते॥ १॥

२२. अग्निस्तिग्मेन शोचिषा यंसद्विश्वं न्या३त्रिणम्। अग्निर्नो वंसते रयिम्॥ २॥

२३. अग्ने मृड महाँ अस्यय आ देवयुं जनम्। इयेथ बर्हिरासदम्॥ ३॥

२४. अग्ने रक्षा णो अंहसः प्रति स्म देव रीषतः। तपिष्ठैरजरो दह॥ ४॥

२५. अग्ने युङ्क्ष्वा हि ये तवाश्वासो देव साधवः। अरं वहन्त्याशवः॥ ५॥

२६. नि त्वा नक्ष्य विश्पते द्युमन्तं धीमहे वयम्। सुवीरमग्न आहुत॥ ६॥

२७. अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयम्। अपां रेतांसि जिन्वति॥ ७॥

२८. इममू षु त्वमस्माकं सनिं गायत्रं नव्यांसम्। अग्ने देवेषु प्र वोचः॥ ८॥
२९. तं त्वा गोपवनो गिरा जनिष्ठदग्ने अङ्गिरः। स पावक श्रुधी हवम्॥ ९॥
३०. परि वाजपतिः कविरग्निर्हव्यान्यक्रमीत्। दधद्रत्नानि दाशुषे॥ १०॥
३१. उदु त्यं जातवेदसं देवं वहन्ति केतवः। दृशे विश्वाय सूर्यम्॥ ११॥
३२. कविमग्निमुप स्तुहि सत्यधर्माणमध्वरे। देवममीवचातनम्॥ १२॥
३३. शं नो देवीरभिष्टये शं नो भवन्तु पीतये। शं योरभि स्त्रवन्तु नः॥ १३॥
३४. कस्य नूनं परीणसि धियो जिन्वसि सत्पते। गोषाता यस्य ते गिरः॥ १४॥

## चतुर्थी दशतिः

ऋषिः—१, ३ शंयुः; २, ५, ८, ९ भर्गः; ४ वसिष्ठः; ६ प्रस्कण्वः; ७ तृणपाणिः; १० सोभरिः॥ देवता—अग्निः॥ छन्दः—बृहती॥ स्वरः—मध्यमः॥

३५. यज्ञायज्ञा वो अग्नये गिरागिरा च दक्षसे ।
प्रप्र वयममृतं जातवेदसं प्रियं मित्रं न शंसिषम्॥ १॥
३६. पाहि नो अग्न एकया पाह्यू३त द्वितीयया ।
पाहि गीर्भिस्तिसृभिरूर्जां पते पाहि चतसृभिर्वसो॥ २॥
३७. बृहद्भिरग्ने अर्चिभिः शुक्रेण देव शोचिषा ।
भरद्वाजे समिधानो यविष्ठ्य रेवत् पावक दीदिहि॥ ३॥
३८. त्वे अग्ने स्वाहुत प्रियासः सन्तु सूरयः ।
यन्तारो ये मघवानो जनानामूर्वं दयन्त गोनाम्॥ ४॥
३९. अग्ने जरितर्विश्पतिस्तपानो देव रक्षसः ।
अप्रोषिवान् गृहपते महाँ असि दिवस्पायुर्दुरोणयुः॥ ५॥
४०. अग्ने विवस्वदुषसश्चित्रं राधो अमर्त्य ।
आ दाशुषे जातवेदो वहा त्वमद्या देवाँ उषर्बुधः॥ ६॥
४१. त्वं नश्चित्र ऊत्या वसो राधांसि चोदय ।
अस्य रायस्त्वमग्ने रथीरसि विदा गाधं तुचे तु नः॥ ७॥

४२. त्वमित् सप्रथा अस्यग्ने त्रातर्ऋतः कविः ।
त्वां विप्रासः समिधान दीदिव आ विवासन्ति वेधसः ॥ ८ ॥

४३. आ नो अग्ने वयोवृधं रयिं पावक शंस्यम् ।
रास्वा च न उपमाते पुरुस्पृहं सुनीती सुयशस्तरम् ॥ ९ ॥

४४. यो विश्वा दयते वसु होता मन्द्रो जनानाम् ।
मधोर्न पात्रा प्रथमान्यस्मै प्र स्तोमा यन्त्वग्नये ॥ १० ॥

## पञ्चमी दशतिः

ऋषिः—१ वसिष्ठः; २ भर्गः; ३, ७ सोभरिः; ४ मनुः; ५ सुदीतिपुरुमीढौ; ६ प्रस्कण्वः; ८ मेधातिथिर्मेध्यातिथिश्च; ९ विश्वामित्रः; १० कण्वः॥ देवता—१-७, ९, १० अग्निः; ८ इन्द्रः॥ छन्दः—बृहती॥ स्वरः—मध्यमः॥

४५. एना वो अग्निं नमसोर्जो नपातमा हुवे ।
प्रियं चेतिष्ठमरतिं स्वध्वरं विश्वस्य दूतममृतम् ॥ १ ॥

४६. शेषे वनेषु मातृषु सं त्वा मर्तास इन्धते ।
अतन्द्रो हव्यं वहसि हविष्कृत आदिद्देवेषु राजसि ॥ २ ॥

४७. अदर्शि गातुवित्तमो यस्मिन् व्रतान्यादधुः ।
उपो षु जातमार्यस्य वर्धनमग्निं नक्षन्तु नो गिरः ॥ ३ ॥

४८. अग्निरुक्थे पुरोहितो ग्रावाणो बर्हिरध्वरे ।
ऋचा यामि मरुतो ब्रह्मणस्पते देवा अवो वरेण्यम् ॥ ४ ॥

४९. अग्निमीडिष्वावसे गाथाभिः शीरशोचिषम् ।
अग्निं राये पुरुमीढ श्रुतं नरोऽग्निः सुदीतये छर्दिः ॥ ५ ॥

५०. श्रुधि श्रुत्कर्ण वह्निभिर्देवैरग्ने सयावभिः ।
आ सीदतु बर्हिषि मित्रो अर्यमा प्रातर्यावभिरध्वरे ॥ ६ ॥

५१. प्र दैवोदासो अग्निर्देव इन्द्रो न मज्मना ।
अनु मातरं पृथिवीं वि वावृते तस्थौ नाकस्य शर्मणि ॥ ७ ॥

२ ३ १ २र ३ १ २३ १ २ ३ १ २र
५२. अध ज्मो अध वा दिवो बृहतो रोचनादधि ।
३ १ २ ३क २र ३२उ ३ १ २
अया वर्धस्व तन्वा गिरा ममा जाता सुक्रतो पृण ॥ ८ ॥
१ २ ३ २उ ३ १ २र ३ २
५३. कायमानो वना त्वं यन्मातॄरजगन्नपः ।
१ ३र ३ १ २ ३ १ २ ३ २ ३२उ ३ १ २
न तत्ते अग्ने प्रमृषे निवर्तनं यद् दूरे सन्निहाभुवः ॥ ९ ॥
१ २र ३ १ २ ३ २ ३ १ २ ३ १ २
५४. नि त्वामग्ने मनुर्दधे ज्योतिर्जनाय शश्वते ।
३ २ ३ १ २ ३ १ २ ३ १ २र ३ १ २ ३ १ २
दीदेथ कण्व ऋतजात उक्षितो यं नमस्यन्ति कृष्टयः ॥ १० ॥

इति प्रथमप्रपाठकस्य प्रथमोऽर्धः ॥

## अथ प्रथमप्रपाठकस्य द्वितीयोऽर्धः

### षष्ठी दशतिः

ऋषिः—१, ७ वसिष्ठः; २, ३, ५ कण्वः; ४ सोभरिः; ६ उत्कीलः; ८ विश्वामित्रः ॥
देवता—१, ४-८ अग्निः; २ ब्रह्मणस्पतिः; ३ यूपः ॥ छन्दः—बृहती ॥
स्वरः—मध्यमः ॥

३ १ २ ३ २ ३ १ २ ३ १ २
५५. देवो वो द्रविणोदाः पूर्णां विवष्ट्वासिचम् ।
१ २ ३ २ ३ १ २ ३ १ २र ३ १ २
उद्वा सिञ्चध्वमुप वा पृणध्वमादिद् वो देव ओहते ॥ १ ॥
२ ३ १ २ ३ २ ३ २ ३क २र ३ १ २
५६. प्रैतु ब्रह्मणस्पतिः प्र देव्येतु सूनृता ।
१ २ ३१ २र ३ १ २ ३ २ ३ १ २
अच्छा वीरं नर्यं पङ्क्तिराधसं देवा यज्ञं नयन्तु नः ॥ २ ॥
३ २ ३ १ २ ३ २ ३ १ २ ३ १ २र ३ २
५७. ऊर्ध्व ऊ षु ण ऊतये तिष्ठा देवो न सविता ।
३ १ २र ३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
ऊर्ध्वो वाजस्य सनिता यदञ्जिभिर्वाघद्भिर्विह्वयामहे ॥ ३ ॥
२उ ३ १ २र ३ २ ३ १ २ ३ १ २
५८. प्र यो राये निनीषति मर्तो यस्ते वसो दाशत् ।
२ ३ १ २ ३ २ ३ १ २ ३ १ २
स वीरं धत्ते अग्न उक्थशंसिनं त्मना सहस्रपोषिणम् ॥ ४ ॥
१ २ ३ १ २ ३ २ ३ १ २ ३ १ २
५९. प्र वो यह्वं पुरूणां विशां देवयतीनाम् ।
३ २ ३ २ ३ १ २ ३ २उ ३ २ ३ १ २
अग्निं सूक्तेभिर्वचोभिर्वृणीमहे यं समिदन्य इन्धते ॥ ५ ॥
३ २ ३ २ ३ २ ३ २ ३ १ २र
६०. अयमग्निः सुवीर्यस्येशे हि सौभगस्य ।
३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
राय ईशे स्वपत्यस्य गोमत ईशे वृत्रहथानाम् ॥ ६ ॥

६१. त्वमग्ने गृहपतिस्त्वं होता नो अध्वरे ।
त्वं पोता विश्ववार प्रचेता यक्षि यासि च वार्यम्॥ ७॥

६२. सखायस्त्वा ववृमहे देवं मर्त्तास ऊतये ।
अपां नपातं सुभगं सुदंससं सुप्रतूर्तिमनेहसम् ॥ ८॥

## सप्तमी दशतिः

ऋषिः—१ श्यावाश्ववामदेवौ; २ उपस्तुतो वार्ष्टिहव्यः; ३ बृहदुक्थः; ४ कुत्सः; ५, ६ भरद्वाजः; ७ वामदेवः; ८, १० वसिष्ठः; ९ त्रिशिरास्त्वाष्ट्रः॥ देवता—अग्निः॥ छन्दः—१, ३, ५-९ त्रिष्टुप्; २, ४ जगती; १० त्रिपाद् विराड् गायत्री॥ स्वरः—१, ३, ५-९ धैवतः; २, ४ निषादः; १० षड्जः॥

६३. आ जुहोता हविषा मर्जयध्वं नि होतारं गृहपतिं दधिध्वम्।
इडस्पदे नमसा रातहव्यं सपर्यता यजतं पस्त्यानाम्॥ १॥

६४. चित्र इच्छिशोस्तरुणस्य वक्षथो न यो मातरावन्वेति धातवे।
अनूधा यदजीजनदधा चिदा ववक्षत्सद्यो महि दूत्यां३ चरन्॥ २॥

६५. इदं त एकं पर ऊ त एकं तृतीयेन ज्योतिषा सं विशस्व।
संवेशनस्तन्वे३ चारुरेधि प्रियो देवानां परमे जनित्रे ॥ ३॥

६६. इमं स्तोममर्हते जातवेदसे रथमिव सं महेमा मनीषया।
भद्रा हि नः प्रमतिरस्य संसद्यग्ने सख्ये मा रिषामा वयं तव॥ ४॥

६७. मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आ जातमग्निम्।
कविं सम्राजमतिथिं जनानामासन्नः पात्रं जनयन्त देवाः॥ ५॥

६८. वि त्वदापो न पर्वतस्य पृष्ठादुक्थेभिरग्ने जनयन्त देवाः।
तं त्वा गिरः सुष्टुतयो वाजयन्त्याजिं न गिर्ववाहो जिग्युरश्वाः॥ ६॥

६९. आ वो राजानमध्वरस्य रुद्रं होतारं सत्ययजं रोदस्योः।
अग्निं पुरा तनयित्नोरचित्ताद्धिरण्यरूपमवसे कृणुध्वम्॥ ७॥

७०. इन्धे राजा समर्यो नमोभिर्यस्य प्रतीकमाहुतं घृतेन ।
नरो हव्येभिरीडते सबाध आग्निरग्रमुषसामशोचि ॥ ८॥

७१. प्र केतुना बृहता यात्यग्निरा रोदसी वृषभो रोरवीति।
दिवश्चिदन्तादुपमामुदानडपामुपस्थे महिषो ववर्ध॥ ९॥

७२. अग्निं नरो दीधितिभिररण्योर्हस्तच्युतं जनयत प्रशस्तम्।
दूरेदृशं गृहपतिमथव्युम् ॥ १०॥

## अष्टमी दशतिः

ऋषिः—१ बुधगविष्ठिरौ; २, ५ वत्सप्रीः; ३ भरद्वाजः; ४, ७ विश्वामित्रः; ६ वसिष्ठः;
८ पायुः॥ देवता—१, २, ४-८ अग्निः; ३ पूषा॥ छन्दः—त्रिष्टुप्॥
स्वरः—धैवतः॥

७३. अबोध्यग्निः समिधा जनानां प्रति धेनुमिवायतीमुषासम्।
यह्वाइव प्र वयामुज्जिहानाः प्र भानवः सस्रते नाकमच्छ॥ १॥

७४. प्र भूर्जयन्तं महां विपोधां मूरैरमूरं पुरां दर्माणम् ।
नयन्तं गीर्भिर्वना धियं धा हरिश्मश्रुं न वर्मणा धनर्चिम्॥ २॥

७५. शुक्रं ते अन्यद्यजतं ते अन्यद् विषुरूपे अहनी द्यौरिवासि।
विश्वा हि माया अवसि स्वधावन्भद्रा ते पूषन्निह रातिरस्तु॥ ३॥

७६. इडामग्ने पुरुदंसं सनिं गोः शश्वत्तमं हवमानाय साध।
स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे ॥ ४॥

७७. प्र होता जातो महान्नभोविन्नृषद्मा सीददपां विवर्ते ।
दधद्यो धायी सुते वयांसि यन्ता वसूनि विधते तनूपाः॥ ५॥

७८. प्र सम्राजमसुरस्य प्रशस्तं पुंसः कृष्टीनामनुमाद्यस्य ।
इन्द्रस्येव प्र तवसस्कृतानि वन्दद्वारा वन्दमाना विवष्टु॥ ६॥

७९. अरण्योर्निहितो जातवेदा गर्भइवेत् सुभृतो गर्भिणीभिः।
दिवेदिव ईड्यो जागृवद्भिर्हविष्मद्भिर्मनुष्येभिरग्निः ॥ ७॥

८०. सनादग्ने मृणसि यातुधानान्न त्वा रक्षांसि पृतनासु जिग्युः।
अनु दह सहमूरान् कयादो मा ते हेत्या मुक्षत दैव्यायाः॥ ८॥

## नवमी दशतिः

ऋषिः—१ गय आत्रेयः; २ वामदेवः; ३, ४ भरद्वाजः; ५ मृक्तवाहा द्वितः; ६ वसूयव आत्रेयः; ७, ९ गोपवनः; ८ पूरुरात्रेयः; १० वामदेवः, कश्यपो वा मारीचो मनुर्वा वैवस्वतः; उभौ वा॥ देवता—अग्निः॥ छन्दः—अनुष्टुप्॥ स्वरः—गान्धारः॥

८१. अग्न ओजिष्ठमा भर द्युम्नमस्मभ्यमध्रिगो ।
प्र नो राये पनीयसे रत्सि वाजाय पन्थाम् ॥ १ ॥

८२. यदि वीरो अनु ष्यादग्निमिन्धीत मर्त्यः ।
आजुह्वद्धव्यमानुषक् शर्म भक्षीत दैव्यम् ॥ २ ॥

८३. त्वेषस्ते धूम ऋण्वति दिवि संच्छुक्र आततः।
सूरो न हि द्युता त्वं कृपा पावक रोचसे ॥ ३ ॥

८४. त्वं हि क्षैतवद् यशोऽग्ने मित्रो न पत्यसे ।
त्वं विचर्षणे श्रवो वसो पुष्टिं न पुष्यसि ॥ ४ ॥

८५. प्रातरग्निः पुरुप्रियो विश स्तवेतातिथिः ।
विश्वे यस्मिन्नमर्त्ये हव्यं मर्तास इन्धते ॥ ५ ॥

८६. यद् वाहिष्ठं तदग्नये बृहदर्च विभावसो ।
महिषीव त्वद् रयिस्त्वद् वाजा उदीरते ॥ ६ ॥

८७. विशोविशो वो अतिथिं वाजयन्तः पुरुप्रियम्।
अग्निं वो दुर्यं वचः स्तुषे शूषस्य मन्मभिः ॥ ७ ॥

८८. बृहद् वयो हि भानवेऽर्चा देवायाग्नये ।
यं मित्रं न प्रशस्तये मर्तासो दधिरे पुरः ॥ ८ ॥

८९. अगन्म वृत्रहन्तमं ज्येष्ठमग्निमानवम् ।
यः स्म श्रुतर्वन्नार्क्षे बृहदनीक इध्यते ॥ ९ ॥

९०. जातः परेण धर्मणा यत् सवृद्भिः सहाभुवः ।
पिता यत्कश्यपस्याग्निः श्रद्धा माता मनुः कविः॥ १० ॥

## दशमी दशतिः

ऋषिः—१ अग्निस्तापसः; २ वामदेवः; ३ काश्यपोऽसितो देवलो वा; ४ सोमाहुतिर्भार्गवः; ५ पायुः; ६ प्रस्कण्वः॥ देवता—१ विश्वेदेवाः; २ अङ्गिराः; ३-६ अग्निः॥ छन्दः—अनुष्टुप्॥ स्वरः—गान्धारः॥

९१. सोमं राजानं वरुणमग्निमन्वारभामहे ।
आदित्यं विष्णुं सूर्यं ब्रह्माणं च बृहस्पतिम् ॥ १ ॥

९२. इत एत उदारुहन् दिवः पृष्ठान्या रुहन् ।
प्र भूर्जयो यथा पथोद् द्यामङ्गिरसो ययुः ॥ २ ॥

९३. राये अग्ने महे त्वा दानाय समिधीमहि ।
ईडिष्वा हि महे वृषं द्यावा होत्राय पृथिवी ॥ ३ ॥

९४. दधन्वे वा यदीमनु वोचद् ब्रह्मेति वेरु तत् ।
परि विश्वानि काव्या नेमिश्चक्रमिवाभुवत् ॥ ४ ॥

९५. प्रत्यग्ने हरसा हरः शृणाहि विश्वतस्परि ।
यातुधानस्य रक्षसो बलं न्युब्ज वीर्यम् ॥ ५ ॥

९६. त्वमग्ने वसूँरिह रुद्राँ आदित्याँ उत ।
यजा स्वध्वरं जनं मनुजातं घृतप्रुषम् ॥ ६ ॥

इति प्रथमः प्रपाठकः समाप्तः॥

# अथ द्वितीयप्रपाठकस्य प्रथमोऽर्धः

## एकादशी दशतिः

ऋषिः—१ दीर्घतमाः; २, ४ विश्वामित्रः; ३ गोतमः; ५ त्रितः; ६ इरिम्बिठिः; ७, ८, १० विश्वमना वैयश्वः; ९ ऋजिष्वा भारद्वाजः॥ देवता—१-४, ७-१० अग्निः, ५ पवमानः; ६ अदितिः॥ छन्दः—उष्णिक्॥ स्वरः—ऋषभः॥

९७. पुरु त्वा दाशिवाँ वोचेऽरिरग्ने तव स्विदा ।
तोदस्येव शरण आ महस्य ॥ १ ॥

९८. प्र होत्रे पूर्व्यं वचोऽ ग्नये भरता बृहत् ।
विपां ज्योतींषि बिभ्रते न वेधसे ॥ २ ॥

९९. अग्ने वाजस्य गोमत ईशानः सहसो यहो ।
अस्मे देहि जातवेदो महि श्रवः ॥ ३ ॥

१००. अग्ने यजिष्ठो अध्वरे देवां देवयते यज ।
होता मन्द्रो वि राजस्यति स्त्रिधः ॥ ४ ॥

१०१. जज्ञानः सप्त मातृभिर्मेधामाशासत श्रिये ।
अयं ध्रुवो रयीणां चिकेतदा ॥ ५ ॥

१०२. उत स्या नो दिवा मतिरदितिरूत्यागमत् ।
सा शन्ताता मयस्करदप स्त्रिधः ॥ ६ ॥

१०३. ईडिष्वा हि प्रतीव्यां३ यजस्व जातवेदसम् ।
चरिष्णुधूममगृभीतशोचिषम् ॥ ७ ॥

१०४. न तस्य मायया च न रिपुरीशीत मर्त्यः ।
यो अग्नये ददाश हव्यदातये ॥ ८ ॥

१०५. अप त्यं वृजिनं रिपुं स्तेनमग्ने दुराध्यम् ।
दविष्ठमस्य सत्पते कृधी सुगम् ॥ ९ ॥

१०६. श्रुष्ट्यग्ने नवस्य मे स्तोमस्य वीर विश्पते ।
नि मायिनस्तपसा रक्षसो दह ॥ १० ॥

## द्वादशी दशतिः

ऋषिः—१ प्रयोगो भार्गवः; २, ३, ५-७ सोभरिः; ४ प्रयोगो भार्गवः; सोभरिः काण्वो वा; ८ विश्वमनाः ॥ देवता—अग्निः ॥ छन्दः—ककुबुष्णिक् ॥ स्वरः—ऋषभः ॥

१०७. प्र मंहिष्ठाय गायत ऋताव्ने बृहते शुक्रशोचिषे ।
उपस्तुतासो अग्नये ॥ १ ॥

१०८. प्र सो अग्ने तवोतिभिः सुवीराभिस्तरति वाजकर्मभिः ।
यस्य त्वं सख्यमाविथ ॥ २ ॥

१०९. तं गूर्धया स्वर्णरं देवासो देवमरतिं दधन्विरे ।
देवत्रा हव्यमूहिषे ॥ ३ ॥

११०. मा नो हृणीथा अतिथिं वसुरग्निः पुरुप्रशस्त एषः ।
यः सुहोता स्वध्वरः ॥ ४ ॥

१११. भद्रो नो अग्निराहुतो भद्रा रातिः सुभग भद्रो अध्वरः ।
भद्रा उत प्रशस्तयः ॥ ५ ॥

११२. यजिष्ठं त्वा ववृमहे देवं देवत्रा होतारममर्त्यम् ।
अस्य यज्ञस्य सुक्रतुम् ॥ ६ ॥

११३. तदग्ने द्युम्नमा भर यत्सासाहा सदने कं चिदत्रिणम् ।
मन्युं जनस्य दूढ्यम् ॥ ७ ॥

११४. यद्वा उ विश्पतिः शितः सुप्रीतो मनुषो विशे ।
विश्वेदग्निः प्रति रक्षांसि सेधति ॥ ८ ॥

इति प्रथमोऽध्यायः ॥

इति सामवेदसंहितायामाग्नेयं काण्डम् ॥

# अथ ऐन्द्रं काण्डम्

## अथ द्वितीयोऽध्यायः

### प्रथमा दशतिः

ऋषिः—१ शंयुर्बार्हस्पत्यः; २, ४, ५ श्रुतकक्षः; ३ हर्यतः प्रागाथः; ६ इन्द्रमातरो देवजामयः; ७, ८ गोषूक्त्यश्वसूक्तिनौ; ९, १० मेधातिथिराङ्गिरसः प्रियमेधः काण्वश्च॥
देवता—इन्द्रः॥ छन्दः गायत्री॥ स्वरः—षड्जः॥

११५. तद्वो गाय सुते सचा पुरुहूताय सत्वने। शं यद्गवे न शाकिने॥ १॥
११६. यस्ते नूनं शतक्रतविन्द्र द्युम्नितमो मदः। तेन नूनं मदे मदेः॥ २॥
११७. गाव उप वदावटे मही यज्ञस्य रप्सुदा। उभा कर्णा हिरण्यया॥ ३॥
११८. अरमश्वाय गायत श्रुतकक्षारं गवे। अरमिन्द्रस्य धाम्ने ॥ ४॥
११९. तमिन्द्रं वाजयामसि महे वृत्राय हन्तवे। स वृषा वृषभो भुवत्॥ ५॥
१२०. त्वमिन्द्र बलादधि सहसो जात ओजसः। त्वं सन्वृषन्वृषेदसि॥ ६॥
१२१. यज्ञ इन्द्रमवर्धयद् यद्भूमिं व्यवर्तयत्। चक्राण ओपशं दिवि॥ ७॥
१२२. यदिन्द्राहं यथा त्वमीशीय वस्व एक इत्। स्तोता मे गोसखा स्यात्॥ ८॥
१२३. पन्यंपन्यमित् सोतार आ धावत मद्याय। सोमं वीराय शूराय॥ ९॥
१२४. इदं वसो सुतमन्धः पिबा सुपूर्णमुदरम्। अनाभयिन् ररिमा ते॥ १०॥

### द्वितीया दशतिः

ऋषिः—१, २ सुकक्षश्रुतकक्षौ; ३ भरद्वाजः; ४ श्रुतकक्षः; ५, ६ मधुच्छन्दाः; ७, ९, १० त्रिशोकः; ८ वसिष्ठः। देवता—इन्द्रः॥ छन्दः—गायत्री॥ स्वरः—षड्जः॥

१२५. उद् घेदभि श्रुतामघं वृषभं नर्यापसम्। अस्तारमेषि सूर्य॥ १॥
१२६. यदद्य कच्च वृत्रहन्नुदगा अभि सूर्य। सर्वं तदिन्द्र ते वशे॥ २॥
१२७. य आनयत् परावतः सुनीती तुर्वशं यदुम्। इन्द्रः स नो युवा सखा॥ ३॥
१२८. मा न इन्द्राभ्याऽऽ३दिशः सूरो अक्तुष्वा यमत्। त्वा युजा वनेम तत्॥ ४॥

१२९.एन्द्र सानसिं रयिं सजित्वानं सदासहम्। वर्षिष्ठमूतये भर॥ ५॥

१३०.इन्द्रं वयं महाधन इन्द्रमर्भे हवामहे। युजं वृत्रेषु वज्रिणम्॥ ६॥

१३१.अपिबत् कद्रुवः सुतमिन्द्रः सहस्रबाह्वे। तत्रादधिष्ट पौंस्यम्॥ ७॥

१३२.वयमिन्द्र त्वायवोऽभि प्र नोनुमो वृषन्। विद्धी त्वा३स्य नो वसो॥ ८॥

१३३. आ घा ये अग्निमिन्धते स्तृणन्ति बर्हिरानुषक्।
येषामिन्द्रो युवा सखा ॥ ९॥

१३४. भिन्धि विश्वा अप द्विषः परि बाधो जही मृधः।
वसु स्पार्हं तदा भर ॥ १०॥

## तृतीया दशतिः

ऋषिः—१ कण्वो घौरः; २ त्रिशोकः; ३, ९ वत्सः काण्वः; ४ कुसीदी काण्वः;
५ मेधातिथिः; ६ श्रुतकक्षः; ७ श्यावाश्वः; ८ प्रगाथः काण्वः;
१० इरिम्बिठिः॥ देवता—इन्द्रः॥ छन्दः—गायत्री॥
स्वरः—षड्जः॥

१३५. इहेव शृण्व एषां कशा हस्तेषु यद्वदान्। नि यामं चित्रमृञ्जते॥ १॥

१३६. इम उ त्वा वि चक्षते सखाय इन्द्र सोमिनः। पुष्टावन्तो यथा पशुम्॥ २॥

१३७. समस्य मन्यवे विशो विश्वा नमन्त कृष्टयः। समुद्रायेव सिन्धवः॥ ३॥

१३८. देवानामिदवो महत्तदा वृणीमहे वयम्। वृष्णामस्मभ्यमूतये॥ ४॥

१३९. सोमानां स्वरणं कृणुहि ब्रह्मणस्पते। कक्षीवन्तं य औशिजः॥ ५॥

१४०. बोधन्मना इदस्तु नो वृत्रहा भूर्यासुतिः। शृणोतु शक्र आशिषम्॥ ६॥

१४१. अद्या नो देव सवितः प्रजावत्सावीः सौभगम्। परा दुःष्वप्न्यं सुव॥ ७॥

१४२. क्वा३स्य वृषभो युवा तुविग्रीवो अनानतः। ब्रह्मा कस्तं सपर्यति॥ ८॥

१४३. उपह्वरे गिरीणां सङ्गमे च नदीनाम्। धिया विप्रो अजायत॥ ९॥

१४४. प्र सम्राजं चर्षणीनामिन्द्रं स्तोता नव्यं गीर्भिः। नरं नृषाहं मंहिष्ठम्॥ १०॥

इति द्वितीयः प्रपाठकस्य प्रथमोऽर्धः॥

## अथ द्वितीयप्रपाठकस्य द्वितीयोऽर्धः

### चतुर्थी दशतिः

ऋषिः—१ श्रुतकक्षः; २ मेधातिथिः; ३ गोतमः; ४ भरद्वाजः; ५ बिन्दुः पूतदक्षो वा; ६, ७ श्रुतकक्षः सुकक्षो वा; ८ वत्सः काण्वः; ९ शुनःशेपः; १० शुनःशेपो वामदेवो वा॥ देवता—इन्द्रः; ५ मरुतः॥ छन्दः—गायत्री॥ स्वरः—षड्जः॥

१४५. अपादु शिप्र्यन्धसः सुदक्षस्य प्रहोषिणः। इन्दोरिन्द्रो यवाशिरः॥ १॥

१४६. इमा उ त्वा पुरूवसोऽभि प्र नोनुवुर्गिरः। गावो वत्सं न धेनवः॥ २॥

१४७. अत्राह गोरमन्वत नाम त्वष्टुरपीच्यम्। इत्था चन्द्रमसो गृहे॥ ३॥

१४८. यदिन्द्रो अनयद्रितो महीरपो वृषन्तमः। तत्र पूषाभुवत् सचा॥ ४॥

१४९. गौर्धयति मरुतां श्रवस्युर्माता मघोनाम्। युक्ता वह्नी रथानाम्॥ ५॥

१५०. उप नो हरिभिः सुतं याहि मदानां पते। उप नो हरिभिः सुतम्॥ ६॥

१५१. इष्टा होत्रा असृक्षतेन्द्रं वृधन्तो अध्वरे। अच्छावभृथमोजसा॥ ७॥

१५२. अहमिद्धि पितुष्परि मेधामृतस्य जग्रह। अहं सूर्यइवाजनि॥ ८॥

१५३. रेवतीर्नः सधमाद इन्द्रे सन्तु तुविवाजाः। क्षुमन्तो याभिर्मदेम॥ ९॥

१५४. सोमः पूषा च चेततुर्विश्वासां सुक्षितीनाम्। देवत्रा रथ्योर्हिता॥ १०॥

### पञ्चमी दशतिः

ऋषिः—१, ४ श्रुतकक्षः; २ वसिष्ठः; ३ मेधातिथिप्रियमेधौ; ५ इरिम्बिठिः; ६, १० मधुच्छन्दाः; ७ त्रिशोकः; ८ कुसीदी; ९ शुनःशेपः॥ देवता—इन्द्रः; ६ प्रजापतिः॥ छन्दः—१ अनुष्टुप्; गायत्री॥ स्वरः—१ गान्धारः; षड्जः॥

१५५. पान्तमा वो अन्धस इन्द्रमभि प्र गायत ।
विश्वासाहं शतक्रतुं मंहिष्ठं चर्षणीनाम् ॥ १ ॥

१५६. प्र व इन्द्राय मादनं हर्यश्वाय गायत ।
सखायः सोमपाव्ने ॥ २ ॥

१५७. वयमु त्वा तदिदर्था इन्द्र त्वायन्तः सखायः ।
कण्वा उक्थेभिर्जरन्ते ॥ ३ ॥

१५८. इन्द्राय मद्वने सुतं परि ष्टोभन्तु नो गिरः। अर्कमर्चन्तु कारवः॥ ४॥

१५९. अयं त इन्द्र सोमो निपूतो अधि बर्हिषि। एहीमस्य द्रवा पिब॥ ५॥

१६०. सुरूपकृत्नुमूतये सुदुघामिव गोदुहे। जुहूमसि द्यविद्यवि॥ ६॥

१६१. अभि त्वा वृषभा सुते सुतं सृजामि पीतये। तृम्पा व्यश्नुही मदम्॥ ७॥

१६२. य इन्द्र चमसेष्वा सोमश्चमूषु ते सुतः। पिबेदस्य त्वमीशिषे॥ ८॥

१६३. योगेयोगे तवस्तरं वाजेवाजे हवामहे। सखाय इन्द्रमूतये॥ ९॥

१६४. आ त्वेता नि षीदतेन्द्रमभि प्र गायत। सखायः स्तोमवाहसः॥ १०॥

## षष्ठी दशतिः

ऋषिः—१ विश्वामित्रः; २ मधुच्छन्दाः; ३ कुसीदी काण्वः; ४ प्रियमेधः; ५, ८ वामदेवः; ६, ९ श्रुतकक्षः; ७ मेधातिथिः; १० बिन्दुः पूतदक्षो वा॥ देवता—इन्द्रः॥

छन्दः—गायत्री॥ स्वरः—षड्जः॥

१६५. इदं ह्यन्वोजसा सुतं राधानां पते ।
पिबा त्वा३स्य गिर्वणः ॥ १ ॥

१६६. महाँ इन्द्रः पुरश्च नो महित्वमस्तु वज्रिणे ।
द्यौर्न प्रथिना शवः ॥ २ ॥

१६७. आ तू न इन्द्र क्षुमन्तं चित्रं ग्राभं सं गृभाय।
महाहस्ती दक्षिणेन ॥ ३ ॥

१६८. अभि प्र गोपतिं गिरेन्द्रमर्च यथा विदे ।
सूनुं सत्यस्य सत्पतिम् ॥ ४ ॥

१६९. कया नश्चित्र आ भुवदूती सदावृधः सखा ।
कया शचिष्ठया वृता ॥ ५ ॥

१७०. त्यमु वः सत्रासाहं विश्वासु गीर्ष्वायतम् ।
आ च्यावयस्यूतये ॥ ६ ॥

१७१. सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् ।
सनिं मेधामयासिषम् ॥ ७ ॥

१७२. ये ते पन्था अधो दिवो येभिर्व्यश्वमैरयः ।
उत श्रोषन्तु नो भुवः ॥ ८ ॥

१७३. भद्रंभद्रं न आ भरेषमूर्जं शतक्रतो ।
यदिन्द्र मृडयासि नः ॥ ९ ॥

१७४. अस्ति सोमो अयं सुतः पिबन्त्यस्य मरुतः ।
उत स्वराजो अश्विना ॥ १० ॥

## सप्तमी दशतिः

ऋषिः—१ इन्द्रमातरो देवजामयः; २ गोधा; ३ दध्यङ्ङाथर्वणः; ४ प्रस्कण्वः; ५ गोतमः;
६ मधुच्छन्दाः; ७ वामदेवः; ८ वत्सः; ९ शुनःशेपः; १० वातायन उलः ॥
देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१७५. ईङ्खयन्तीरपस्युव इन्द्रं जातमुपासते। वन्वानासः सुवीर्यम् ॥ १ ॥

१७६. न कि देवा इनीमसि न क्या योपयामसि। मन्त्रश्रुत्यं चरामसि ॥ २ ॥

१७७. दोषो आगाद् बृहद्गाय द्युमद्गामन्नाथर्वण। स्तुहि देवं सवितारम् ॥ ३ ॥

१७८. एषो उषा अपूर्व्या व्युच्छति प्रिया दिवः। स्तुषे वामश्विना बृहत् ॥ ४ ॥

१७९. इन्द्रो दधीचो अस्थभिर्वृत्राण्यप्रतिष्कुतः। जघान नवतीर्नव ॥ ५ ॥

१८०. इन्द्रेहि मत्स्यन्धसो विश्वेभिः सोमपर्वभिः। महाँ अभिष्टिरोजसा ॥ ६ ॥

१८१. आ तू न इन्द्र वृत्रहन्नस्माकमर्धमा गहि। महान्महीभिरूतिभिः ॥ ७ ॥

१८२. ओजस्तदस्य तित्विष उभे यत् समवर्तयत्। इन्द्रश्चर्मेव रोदसी ॥ ८ ॥

१८३. अयमु ते समतसि कपोतइव गर्भधिम्। वचस्तच्चिन्न ओहसे ॥ ९ ॥

१८४. वात आ वातु भेषजं शम्भु मयोभु नो हृदे। प्र न आयूँषि तारिषत् ॥ १० ॥

## अष्टमी दशतिः

ऋषिः—१ कण्वः; २, ३, ९ वत्सः; ४ श्रुतकक्षः; ५ मधुच्छन्दाः; ६ वामदेवः;
७ इरिम्बिठिः; ८ वारुणिः सत्यधृतिः ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥
स्वरः—षड्जः ॥

१८५. यं रक्षन्ति प्रचेतसो वरुणो मित्रो अर्यमा। न किः स दभ्यते जनः ॥ १ ॥

१८६. गव्यो षु णो यथा पुराश्वयोत रथया। वरिवस्या महोनाम्॥ २॥
१८७. इमास्त इन्द्र पृश्नयो घृतं दुहत आशिरम्। एनामृतस्य पिप्युषीः॥ ३॥
१८८. अया धिया च गव्यया पुरुणामन्पुरुष्टुत। यत् सोमेसोम आभुवः॥ ४॥
१८९. पावका नः सरस्वती वाजेभिर्वाजिनीवती। यज्ञं वष्टु धियावसुः॥ ५॥
१९०. क इमं नाहुषीष्वा इन्द्रं सोमस्य तर्पयात्। स नो वसून्या भरात्॥ ६॥
१९१. आ याहि सुषुमा हि त इन्द्र सोमं पिबा इमम्। एदं बर्हिः सदो मम॥ ७॥
१९२. महि त्रीणामवरस्तु द्युक्षं मित्रस्यार्यम्णः। दुराधर्षं वरुणस्य॥ ८॥
१९३. त्वावतः पुरूवसो वयमिन्द्र प्रणेतः। स्मसि स्थातर्हरीणाम्॥ ९॥

इति द्वितीयः प्रपाठकः समाप्तः॥

## अथ तृतीयप्रपाठकस्य प्रथमोऽर्धः

### नवमी दशतिः

ऋषिः—१ प्रगाथः; २ विश्वामित्र; ३, १० वामदेवः; ४, ६ श्रुतकक्षः;
५ मधुच्छन्दाः; ७ गृत्समदः; ८, ९ भरद्वाजः॥ देवता—इन्द्रः॥
छन्दः—गायत्री॥ स्वरः—षड्जः॥

१९४. उत्त्वा मन्दन्तु सोमाः कृणुष्व राधो अद्रिवः। अव ब्रह्मद्विषो जहि॥ १॥
१९५. गिर्वणः पाहि नः सुतं मधोर्धाराभिरज्यसे। इन्द्र त्वादातमिद्यशः॥ २॥
१९६. सदा व इन्द्रश्चर्कृषदा उपो नु स सपर्यन्। न देवो वृतः शूर इन्द्रः॥ ३॥
१९७. आ त्वा विशन्त्विन्दवः समुद्रमिव सिन्धवः। न त्वामिन्द्राति रिच्यते॥ ४॥
१९८. इन्द्रमिद्गाथिनो बृहदिन्द्रमर्केभिरर्किणः। इन्द्रं वाणीरनूषत॥ ५॥
१९९. इन्द्र इषे ददातु न ऋभुक्षणमृभुं रयिम्। वाजी ददातु वाजिनम्॥ ६॥
२००. इन्द्रो अङ्ग महद्भयमभी षदप चुच्यवत्। स हि स्थिरो विचर्षणिः॥ ७॥
२०१. इमा उ त्वा सुतेसुते नक्षन्ते गिर्वणो गिरः। गावो वत्सं न धेनवः॥ ८॥
२०२. इन्द्रा नु पूषणा वयं सख्याय स्वस्तये। हुवेम वाजसातये॥ ९॥

२०३. न कि इन्द्र त्वदुत्तरं न ज्यायो अस्ति वृत्रहन्। न क्येवं यथा त्वम्॥ १०॥

## दशमी दशतिः

ऋषिः—१, ४ त्रिशोकः; २ मधुच्छन्दाः; ३ वत्सः; ५ सुकक्षः; ६, ९ वामदेवः;
७ विश्वामित्रः; ८ गोषूक्त्यश्वसूक्तिनौ; १० श्रुतकक्षः सुकक्षो वा॥
देवता—इन्द्रः॥ छन्दः—गायत्री॥ स्वरः—षड्जः॥

२०४. तरणिं वो जनानां त्रदं वाजस्य गोमतः। समानमु प्र शंसिषम्॥ १॥

२०५. असृग्रमिन्द्र ते गिरः प्रति त्वामुदहासत। सजोषा वृषभं पतिम्॥ २॥

२०६. सुनीथो घा स मर्त्यो यं मरुतो यमर्यमा। मित्रास्पान्त्यद्रुहः॥ ३॥

२०७. यद्वीडाविन्द्र यत्स्थिरे यत्पर्शाने पराभृतम्। वसु स्पार्हं तदा भर॥ ४॥

२०८. श्रुतं वो वृत्रहन्तमं प्र शर्धं चर्षणीनाम्। आशिषे राधसे महे॥ ५॥

२०९. अरं त इन्द्र श्रवसे गमेम शूर त्वावतः। अरं शक्र परेमणि॥ ६॥

२१०. धानावन्तं करम्भिणमपूपवन्तमुक्थिनम्। इन्द्र प्रातर्जुषस्व नः॥ ७॥

२११. अपां फेनेन नमुचेः शिर इन्द्रोदवर्तयः। विश्वा यदजय स्पृधः॥ ८॥

२१२. इमे त इन्द्र सोमाः सुतासो ये च सोत्वाः। तेषां मत्स्व प्रभूवसो॥ ९॥

२१३. तुभ्यं सुतासः सोमाः स्तीर्णं बर्हिर्विभावसो। स्तोतृभ्य इन्द्र मृडय॥ १०॥

## एकादशी दशतिः

ऋषिः—१ शुनःशेपः; २ श्रुतकक्षः; ३ त्रिशोकः; ४, ९ मेधातिथिः; ५ गोतमः;
६ ब्रह्मातिथिः; ७ विश्वामित्रो जमदग्निर्वा; ८ प्रस्कण्वः॥ देवता—इन्द्रः॥
छन्दः—गायत्री॥ स्वरः—षड्जः॥

२१४. आ व इन्द्रं कृविं यथा वाजयन्तः शतक्रतुम्। मंहिष्ठं सिञ्च इन्दुभिः॥ १॥

२१५. अतश्चिदिन्द्र न उपा याहि शतवाजया। इषा सहस्रवाजया॥ २॥

२१६. आ बुन्दं वृत्रहा ददे जातः पृच्छाद्वि मातरम्। क उग्राः के ह शृण्विरे॥ ३॥

२१७. बृबदुक्थं हवामहे सृप्रकरस्नमूतये। साधः कृण्वन्तमवसे ॥ ४॥

२१८. ऋजुनीती नो वरुणो मित्रो नयति विद्वान्। अर्यमा देवैः सजोषाः॥ ५॥

२१९. दूरादिहेव यत्सतोऽरुणप्सुरशिश्वितत्। वि भानुं विश्वथातनत्॥ ६॥

२२०. आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम्। मध्वा रजांसि सुक्रतू॥ ७॥
२२१. उदु त्ये सूनवो गिरः काष्ठा यज्ञेष्वत्नत। वाश्रा अभिज्ञु यातवे॥ ८॥
२२२. इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम्। समूढमस्य पाँसुले॥ ९॥

## द्वादशी दशतिः

ऋषिः—१, ७, ८ मेधातिथिः; २ वामदेवः; ३, ५ मेधातिथिप्रियमेधौ; ४ विश्वामित्रः; ६ कौत्सो दुर्मित्रः सुमित्रो वा; ९ विश्वामित्रो गाथिनोऽभीपाद उदलो वा; १० श्रुतकक्षः॥ देवता—इन्द्रः॥ छन्दः—गायत्री॥ स्वरः—षड्जः॥

२२३. अतीहि मन्युषाविणं सुषुवांसमुपेरय। अस्य रातौ सुतं पिब॥ १॥
२२४. कदु प्रचेतसे महे वचो देवाय शस्यते। तदिध्द्यस्य वर्धनम्॥ २॥
२२५. उक्थं च न शस्यमानं नागो रयिरा चिकेत। न गायत्रं गीयमानम्॥ ३॥
२२६. इन्द्र उक्थेभिर्मन्दिष्ठो वाजानां च वाजपतिः। हरिवान्त्सुतानां सखा॥ ४॥
२२७. आ याह्युप नः सुतं वाजेभिर्मा हृणीयथाः। महाँइव युवजानिः॥ ५॥
२२८. कदा वसो स्तोत्रं हर्यत आ अव श्मशा रुधद्वाः।
दीर्घं सुतं वाताप्याय ॥ ६॥
२२९. ब्राह्मणादिन्द्र राधसः पिबा सोममृतूँरनु। तवेदं सख्यमस्तृतम्॥ ७॥
२३०. वयं घा ते अपि स्मसि स्तोतार इन्द्र गिर्वणः। त्वं नो जिन्व सोमपाः॥ ८॥
२३१. एन्द्र पृक्षु कासु चिन्नृम्णं तनूषु धेहि नः। सत्राजिदुग्र पौंस्यम्॥ ९॥
२३२. एवा ह्यसि वीरयुरेवा शूर उत स्थिरः। एवा ते राध्यं मनः॥ १०॥

इति द्वितीयोऽध्यायः॥

# अथ तृतीयोऽध्यायः

## प्रथमा दशतिः

ऋषिः—१, ६, ९ वसिष्ठः; २ भरद्वाजः; ३ बालखिल्याः; ४ नोधाः; ५ कलिः प्रागाथः; ७ मेधातिथिः; ८ भर्गः; १० प्रगाथः काण्वः॥ देवता—१-८, १० इन्द्रः; ९ मरुतः॥ छन्दः—बृहती॥ स्वरः—मध्यमः॥

२३३. अभि त्वा शूर नोनुमोऽदुग्धाइव धेनवः ।
ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः॥ १॥

२३४. त्वामिद्धि हवामहे सातौ वाजस्य कारवः ।
त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्वतः ॥ २॥

२३५. अभि प्र वः सुराधसमिन्द्रमर्च यथा विदे ।
यो जरितृभ्यो मघवा पुरूवसुः सहस्रेणेव शिक्षति॥ ३॥

२३६. तं वो दस्ममृतीषहं वसोर्मन्दानमन्धसः ।
अभि वत्सं न स्वसरेषु धेनव इन्द्रं गीर्भिर्नवामहे॥ ४॥

२३७. तरोभिर्वो विदद्वसुमिन्द्रं सबाध ऊतये ।
बृहद्गायन्तः सुतसोमे अध्वरे हुवे भरं न कारिणम्॥ ५॥

२३८. तरणिरित् सिषासति वाजं पुरन्ध्या युजा ।
आ व इन्द्रं पुरुहूतं नमे गिरा नेमिं तष्टेव सुद्रुवम्॥ ६॥

२३९. पिबा सुतस्य रसिनो मत्स्वा न इन्द्र गोमतः।
आपिर्नो बोधि सधमाद्ये वृधे३ऽस्माँ अवन्तु ते धियः॥ ७॥

२४०. त्वं ह्येहि चेरवे विदा भगं वसुत्तये ।
उद्वावृषस्व मघवन् गविष्टय उदिन्द्राश्वमिष्टये ॥ ८॥

२४१. न हि वश्चरमं च न वसिष्ठः परिमंसते ।
अस्माकमद्य मरुतः सुते सचा विश्वे पिबन्तु कामिनः॥ ९॥

२४२. मा चिदन्यद् वि शंसत सखायो मा रिषण्यत।
इन्द्रमित्स्तोता वृषणं सचा सुते मुहुरुक्था च शंसत॥ १०॥

इति तृतीयप्रपाठकस्य प्रथमोऽर्धः॥

# अथ तृतीयप्रपाठकस्य द्वितीयोऽर्धः

## द्वितीया दशतिः

ऋषिः—१ आङ्गिरसः पुरुहन्मा; २, ३, ७-९ मेधातिथिर्मेध्यातिथिश्च; ४ विश्वामित्रः; ५ गोतमः; ६ नृमेधपुरुमेधौ; १० देवातिथिः काण्वः॥ देवता—इन्द्रः॥ छन्दः—बृहती॥ स्वरः—मध्यमः॥

२४३. न किष्टं कर्मणा नशद् यश्चकार सदावृधम् ।
इन्द्रं न यज्ञैर्विश्वगूर्तमृभ्वसमधृष्टं धृष्णुमोजसा ॥ १ ॥

२४४. य ऋते चिदभिश्रिषः पुरा जत्रुभ्य आतृदः ।
सन्धाता सन्धिं मघवा पुरूवसुर्निष्कर्ता विह्रुतं पुनः॥ २ ॥

२४५. आ त्वा सहस्रमा शतं युक्ता रथे हिरण्यये ।
ब्रह्मयुजो हरय इन्द्र केशिनो वहन्तु सोमपीतये ॥ ३ ॥

२४६. आ मन्द्रैरिन्द्र हरिभिर्याहि मयूररोमभिः ।
मा त्वा के चिन्नि येमुरिन्न पाशिनोऽति धन्वेव ताँ इहि॥ ४ ॥

२४७. त्वमङ्ग प्र शंसिषो देवः शविष्ठ मर्त्यम् ।
न त्वदन्यो मघवन्नस्ति मर्डितेन्द्र ब्रवीमि ते वचः ॥ ५ ॥

२४८. त्वमिन्द्र यशा अस्यृजीषी शवसस्पतिः ।
त्वं वृत्राणि हंस्यप्रतीन्येक इत् पुर्वनुत्तश्चर्षणीधृतिः ॥ ६ ॥

२४९. इन्द्रमिद्देवतातय इन्द्रं प्रयत्यध्वरे ।
इन्द्रं समीके वनिनो हवामह इन्द्रं धनस्य सातये ॥ ७ ॥

२५०. इमा उ त्वा पुरूवसो गिरो वर्धन्तु या मम ।
पावकवर्णाः शुचयो विपश्चितोऽभि स्तोमैरनूषत ॥ ८ ॥

२५१. उदु त्ये मधुमत्तमा गिर स्तोमास ईरते ।
सत्राजितो धनसा अक्षितोतयो वाजयन्तो रथाइव ॥ ९ ॥

२५२. यथा गौरो अपा कृतं तृष्यन्नेत्यवेरिणम् ।
आपित्वे नः प्रपित्वे तूयमा गहि कण्वेषु सु सचा पिब॥ १० ॥

## तृतीया दशतिः

ऋषिः—१ भर्गः; २ रेभः काश्यपः; ३ जमदग्निः; ४, ९ मेधातिथिः; ५, ६ नृमेधपुरुमेधौ; ७ वसिष्ठः; ८ रेभः; १० भरद्वाजः॥ देवता—१, २, ४-१० इन्द्रः; ३ आदित्याः॥
छन्दः—बृहती॥ स्वरः—मध्यमः॥

२५३. शग्ध्यू३षु शचीपत इन्द्र विश्वाभिरूतिभिः ।
भगं न हि त्वा यशसं वसुविदमनु शूर चरामसि ॥ १ ॥

२५४. या इन्द्र भुज आभरः स्वर्वाँ असुरेभ्यः ।
स्तोतारमिन्मघवन्नस्य वर्धय ये च त्वे वृक्तबर्हिषः॥ २ ॥

२५५. प्र मित्राय प्रार्यम्णे सचथ्यमृतावसो ।
वरूथ्ये३ वरुणे छन्द्यं वचः स्तोत्रं राजसु गायत ॥ ३ ॥

२५६. अभि त्वा पूर्वपीतय इन्द्र स्तोमेभिरायवः ।
समीचीनास ऋभवः समस्वरन् रुद्रा गृणन्त पूर्व्यम्॥ ४ ॥

२५७. प्र व इन्द्राय बृहते मरुतो ब्रह्मार्चत ।
वृत्रं हनति वृत्रहा शतक्रतुर्वज्रेण शतपर्वणा ॥ ५ ॥

२५८. बृहदिन्द्राय गायत मरुतो वृत्रहन्तमम् ।
येन ज्योतिरजनयन्नृतावृधो देवं देवाय जागृवि ॥ ६ ॥

२५९. इन्द्र क्रतुं न आ भर पिता पुत्रेभ्यो यथा ।
शिक्षा णो अस्मिन्पुरुहूत यामनि जीवा ज्योतिरशीमहि॥ ७ ॥

२६०. मा न इन्द्र परा वृणग्भवा नः सधमाद्ये ।
त्वं न ऊती त्वमिन्न आप्यं मा न इन्द्र परावृणक् ॥ ८ ॥

२६१. वयं घ त्वा सुतावन्त आपो न वृक्तबर्हिषः ।
पवित्रस्य प्रस्रवणेषु वृत्रहन् परि स्तोतार आसते ॥ ९ ॥

२६२. यदिन्द्र नाहुषीष्वा ओजो नृम्णं च कृष्टिषु ।
यद्वा पञ्च क्षितीनां द्युम्नमा भर सत्रा विश्वानि पौंस्या॥ १० ॥

## चतुर्थी दशतिः

ऋषिः—१ मेधातिथिः; २ रेभः; ३ वत्सः; ४ भरद्वाजः; ५ नृमेधः; ६ पुरुहन्मा;
७ नृमेधपुरुमेधौ; ८ वसिष्ठः; ९ मेधातिथिर्मेध्यातिथिश्च; १० कलिः॥
देवता—इन्द्रः॥ छन्दः—बृहती॥ स्वरः—मध्यमः॥

२६३. सत्यमित्था वृषेदसि वृषजूतिर्नोऽविता ।
वृषा ह्युग्र शृण्विषे परावति वृषो अर्वावति श्रुतः॥ १॥

२६४. यच्छक्रासि परावति यदर्वावति वृत्रहन् ।
अतस्त्वा गीर्भिर्द्युगदिन्द्र केशिभिः सुतावाँ आ विवासति॥ २॥

२६५. अभि वो वीरमन्धसो मदेषु गाय गिरा महा विचेतसम्।
इन्द्रं नाम श्रुत्यं शाकिनं वचो यथा ॥ ३॥

२६६. इन्द्र त्रिधातु शरणं त्रिवरूथं स्वस्तये ।
छर्दिर्यच्छ मघवद्भ्यश्च मह्यं च यावया दिद्युमेभ्यः॥ ४॥

२६७. श्रायन्तइव सूर्यं विश्वेदिन्द्रस्य भक्षत ।
वसूनि जातो जनिमान्योजसा प्रति भागं न दीधिमः॥ ५॥

२६८. न सीमदेव आप तदिषं दीर्घायो मर्त्यः ।
एतग्वा चिद्य एतशो युयोजत इन्द्रो हरी युयोजते॥ ६॥

२६९. आ नो विश्वासु हव्यमिन्द्रं समत्सु भूषत ।
उप ब्रह्माणि सवनानि वृत्रहन् परमज्या ऋचीषम॥ ७॥

२७०. तवेदिन्द्रावमं वसु त्वं पुष्यसि मध्यमम् ।
सत्रा विश्वस्य परमस्य राजसि न किष्ट्वा गोषु वृण्वते॥ ८॥

२७१. क्वेयथ क्वेदसि पुरुत्रा चिद्धि ते मनः ।
अलर्षि युध्म खजकृत् पुरन्दर प्र गायत्रा अगासिषुः॥ ९॥

२७२. वयमेनमिदा ह्योऽपीपेमेह वज्रिणम् ।
तस्मा उ अद्य सवने सुतं भरा नूनं भूषत श्रुते॥ १०॥

## पञ्चमी दशतिः

ऋषिः—१, ६ पुरुहन्मा; २ भर्गः; ३ इरिम्बिठिः; ४ जमदग्निः; ५, ७ देवातिथिः;
८ वसिष्ठः; ९ भरद्वाजः; १० बालखिल्याः॥ देवता—१-३, ५-८, १० इन्द्रः;
४ सूर्यः; ९ इन्द्राग्नी॥ छन्दः—बृहती॥ स्वरः—मध्यमः॥

२७३. यो राजा चर्षणीनां याता रथेभिरध्रिगुः।
विश्वासां तरुता पृतनानां ज्येष्ठं यो वृत्रहा गृणे॥ १॥

२७४. यत इन्द्र भयामहे ततो नो अभयं कृधि।
मघवञ्छग्धि तव तन्न ऊतये वि द्विषो वि मृधो जहि॥ २॥

२७५. वास्तोष्पते ध्रुवा स्थूणांसत्रं सोम्यानाम्।
द्रप्सः पुरां भेत्ता शश्वतीनामिन्द्रो मुनीनां सखा॥ ३॥

२७६. बण्महाँ असि सूर्य बडादित्य महाँ असि।
महस्ते सतो महिमा पनिष्टम मह्ना देव महाँ असि॥ ४॥

२७७. अश्वी रथी सुरूप इद्गोमाँ यदिन्द्र ते सखा।
श्वात्रभाजा वयसा सचते सदा चन्द्रैर्याति सभामुप॥ ५॥

२७८. यद् द्याव इन्द्र ते शतं शतं भूमीरुत स्युः।
न त्वा वज्रिन्त्सहस्रं सूर्या अनु न जातमष्ट रोदसी॥ ६॥

२७९. यदिन्द्र प्रागपागुदग्न्यग्वा हूयसे नृभिः।
सिमा पुरू नृषूतो अस्यानवेऽसि प्रशर्ध तुर्वशे॥ ७॥

२८०. कस्तमिन्द्र त्वा वसवा मर्त्यो दधर्षति।
श्रद्धा हि ते मघवन् पार्ये दिवि वाजी वाजं सिषासति॥ ८॥

२८१. इन्द्राग्नी अपादियं पूर्वागात् पद्वतीभ्यः।
हित्वा शिरो जिह्वया रारपच्चरत् त्रिंशत् पदा न्यक्रमीत्॥ ९॥

२८२. इन्द्र नेदीय एदिहि मितमेधाभिरूतिभिः।
आ शन्तम शन्तमाभिरभिष्टिभिरा स्वापे स्वापिभिः॥ १०॥

## षष्ठी दशतिः

ऋषिः—१ नृमेधः; २, ३ वसिष्ठः; ४ भरद्वाजः; ५ पुरुच्छेपः; ६ वामदेवः; ७ मेध्यातिथिः; ८ भर्गः; ९, १० मेधातिथिर्मेध्यातिथिश्च॥ देवता—१-४, ७-१० इन्द्रः; ५ अश्विनौ; ६ वरुणः॥ छन्दः—बृहती॥ स्वरः—मध्यमः॥

२८३. इत ऊती वो अजरं प्रहेतारमप्रहितम् ।
आशुं जेतारं हेतारं रथीतममतूर्तं तुग्रियावृधम्॥ १ ॥

२८४. मो षु त्वा वाघतश्च नारे अस्मन्नि रीरमन्।
आरात्ताद्वा सधमादं न आ गहीह वा सन्नुप श्रुधि॥ २ ॥

२८५. सुनोता सोमपाव्ने सोममिन्द्राय वज्रिणे ।
पचता पक्तीरवसे कृणुध्वमित् पृणन्नित् पृणते मयः॥ ३ ॥

२८६. यः सत्राहा विचर्षणिरिन्द्रं तं हूमहे वयम्।
सहस्रमन्यो तुविनृम्ण सत्पते भवा समत्सु नो वृधे॥ ४ ॥

२८७. शचीभिर्नः शचीवसू दिवानक्तं दिशस्यतम् ।
मा वां रातिरुप दसत्कदा च नास्मद्रातिः कदा च न॥ ५ ॥

२८८. यदा कदा च मीढुषे स्तोता जरेत मर्त्यः।
आदिद् वन्देत वरुणं विपा गिरा धर्तारं विव्रतानाम्॥ ६ ॥

२८९. पाहि गा अन्धसो मद इन्द्राय मेध्यातिथे।
यः सम्मिश्लो हर्योर्यो हिरण्यय इन्द्रो वज्री हिरण्ययः॥ ७ ॥

२९०. उभयं शृणवच्च न इन्द्रो अर्वागिदं वचः।
सत्राच्या मघवान्त्सोमपीतये धिया शविष्ठ आ गमत्॥ ८ ॥

२९१. महे च न त्वाद्रिवः परा शुल्काय दीयसे।
न सहस्राय नायुताय वज्रिवो न शताय शतामघ॥ ९ ॥

२९२. वस्याँ इन्द्रासि मे पितुरुत भ्रातुरभुञ्जतः।
माता च मे छदयथः समा वसो वसुत्वनाय राधसे॥ १० ॥

इति तृतीयः प्रपाठकः समाप्तः॥

# अथ चतुर्थप्रपाठकस्य प्रथमोऽर्धः

## सप्तमी दशतिः

ऋषिः—१ वसिष्ठः; २, ६, ७ वामदेवः; ३ मेधातिथिमेध्यातिथी; विश्वामित्र इत्येके; ४ नोधाः; ५ मेधातिथिः; ८ बालखिल्याः; ९ मेध्यातिथिः; १० नृमेधः॥ देवता—१-६, ८-१० इन्द्रः; ७ बहवः-( पर्जन्यब्रह्मणस्पत्यदितयो विश्वेदेवाः )॥ छन्दः—बृहती॥ स्वरः—मध्यमः॥

२९३. इम इन्द्राय सुन्विरे सोमासो दध्याशिरः ।
ताँ आ मदाय वज्रहस्त पीतये हरिभ्यां याह्योक आ॥ १॥

२९४. इम इन्द्र मदाय ते सोमाश्चिकित्र उक्थिनः ।
मधोः पपान उप नो गिरः शृणु रास्व स्तोत्राय गिर्वणः॥ २॥

२९५. आ त्वा३ऽद्य सबर्दुघां हुवे गायत्रवेपसम् ।
इन्द्रं धेनुं सुदुघामन्यामिषमुरुधारामरङ्कृतम् ॥ ३॥

२९६. न त्वा बृहन्तो अद्रयो वरन्त इन्द्र वीडवः ।
यच्छिक्षसि स्तुवते मावते वसु न किष्टदा मिनाति ते॥ ४॥

२९७. क ईं वेद सुते सचा पिबन्तं कद्वयो दधे।
अयं यः पुरो विभिनत्त्योजसा मन्दानः शिप्र्यन्धसः॥ ५॥

२९८. यदिन्द्र शासो अव्रतं च्यावया सदसस्परि ।
अस्माकमंशुं मघवन् पुरुस्पृहं वसव्ये अधि बर्हय॥ ६॥

२९९. त्वष्टा नो दैव्यं वचः पर्जन्यो ब्रह्मणस्पतिः।
पुत्रैर्भ्रातृभिरदितिर्नु पातु नो दुष्टरं त्रामणं वचः॥ ७॥

३००. कदा च न स्तरीरसि नेन्द्र सश्चसि दाशुषे।
उपोपेन्नु मघवन् भूय इन्नु ते दानं देवस्य पृच्यते॥ ८॥

३०१. युङ्क्ष्वा हि वृत्रहन्तम हरी इन्द्र परावतः ।
अर्वाचीनो मघवन्त्सोमपीतय उग्र ऋष्वेभिरा गहि॥ ९॥

३०२. त्वामिदा ह्यो नरोऽपीप्यन् वज्रिन् भूर्णयः ।
स इन्द्र स्तोमवाहस इह श्रुध्युप स्वसरमा गहि॥ १०॥

## अष्टमी दशतिः

ऋषिः—१, २, ७, ८ वसिष्ठः; ३ पौर आत्रेयः; ४ प्रस्कण्वः; ५ मेधातिथिमेध्यातिथी;
६ देवातिथिः; ९ नृमेधः; १० नोधाः ॥ देवता—१ उषा; २, ३ अश्विनौ;
४-१० इन्द्रः ॥ छन्दः—बृहती ॥ स्वरः—मध्यमः ॥

३०३. प्रत्यु अदर्श्यायत्यू३च्छन्ती दुहिता दिवः ।
अपो मही वृणुते चक्षुषा तमो ज्योतिष्कृणोति सूनरी ॥ १ ॥

३०४. इमा उ वां दिविष्टय उस्रा हवन्ते अश्विना ।
अयं वामह्वेऽवसे शचीवसू विशंविशं हि गच्छथः ॥ २ ॥

३०५. कुष्ठः को वामश्विना तपानो देवा मर्त्यः ।
घ्नता वामश्नया क्षपमाणोंऽशुनेत्थमु आद्वन्यथा ॥ ३ ॥

३०६. अयं वां मधुमत्तमः सुतः सोमो दिविष्टिषु ।
तमश्विना पिबतं तिरोअह्न्यं धत्तं रत्नानि दाशुषे ॥ ४ ॥

३०७. आ त्वा सोमस्य गल्दया सदा याचन्नहं ज्या ।
भूर्णिं मृगं न सवनेषु चुक्रुधं क ईशानं न याचिषत् ॥ ५ ॥

३०८. अध्वर्यो द्रावया त्वं सोममिन्द्रः पिपासति ।
उपो नूनं युयुजे वृषणा हरी आ च जगाम वृत्रहा ॥ ६ ॥

३०९. अभीषतस्तदा भरेन्द्र ज्यायः कनीयसः ।
पुरूवसुर्हि मघवन् बभूविथ भरेभरे च हव्यः ॥ ७ ॥

३१०. यदिन्द्र यावतस्त्वमेतावदहमीशीय ।
स्तोतारमिद्दधिषे रदावसो न पापत्वाय रंसिषम् ॥ ८ ॥

३११. त्वमिन्द्र प्रतूर्तिष्वभि विश्वा असि स्पृधः ।
अशस्तिहा जनिता वृत्रतूरसि त्वं तूर्य तरुष्यतः ॥ ९ ॥

३१२. प्र यो रिरिक्ष ओजसा दिवः सदोभ्यस्परि ।
न त्वा विव्याच रज इन्द्र पार्थिवमति विश्वं ववक्षिथ ॥ १० ॥

## नवमी दशतिः

ऋषिः—१, २, ६ वसिष्ठः; ३ गातुः; ४ पृथुर्वैन्यः; ५ सप्तगुः; ७ गौरिवीतिः;
८ वेनो भार्गवः; ९ बृहस्पतिर्नकुलो वा; १० सुहोत्रः॥ देवता—इन्द्रः॥
छन्दः—त्रिष्टुप्॥ स्वरः—धैवतः॥

३१३. असावि देवं गोऋजीकमन्धो न्यस्मिन्निन्द्रो जनुषेमुवोच ।
बोधामसि त्वा हर्यश्व यज्ञैर्बोधा न स्तोममन्धसो मदेषु ॥ १ ॥

३१४. योनिष्ट इन्द्र सदने अकारि तमा नृभिः पुरुहूत प्र याहि।
असो यथा नोऽविता वृधश्चिद्ददो वसूनि ममदश्च सोमैः॥ २ ॥

३१५. अदर्दरुत् समसृजो वि खानि त्वमर्णवान् बद्बधानाँ अरम्णाः।
महान्तमिन्द्र पर्वतं वि यद्वः सृजद्धारा अव यद्दानवान् हन्॥ ३ ॥

३१६. सुष्वाणास इन्द्र स्तुमसि त्वा सनिष्यन्तश्चित्तुविनृम्ण वाजम्।
आ नो भर सुवितं यस्य कोना तना त्मना सह्याम त्वोताः॥ ४ ॥

३१७. जगृह्मा ते दक्षिणमिन्द्र हस्तं वसूयवो वसुपते वसूनाम्।
विद्मा हि त्वा गोपतिं शूर गोनामस्मभ्यं चित्रं वृषणं रयिं दाः॥ ५ ॥

३१८. इन्द्रं नरो नेमधिता हवन्ते यत्पार्या युनजते धियस्ताः।
शूरो नृषाता श्रवसश्च काम आ गोमति व्रजे भजा त्वं नः॥ ६ ॥

३१९. वयः सुपर्णा उप सेदुरिन्द्रं प्रियमेधा ऋषयो नाधमानाः।
अप ध्वान्तमूर्णुहि पूर्द्धि चक्षुर्मुमुग्ध्या३स्मान्निधयेव बद्धान्॥ ७ ॥

३२०. नाके सुपर्णमुप यत् पतन्तं हृदा वेनन्तो अभ्यचक्षत त्वा।
हिरण्यपक्षं वरुणस्य दूतं यमस्य योनौ शकुनं भुरण्युम्॥ ८ ॥

३२१. ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः।
स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः॥ ९ ॥

३२२. अपूर्व्या पुरुतमान्यस्मै महे वीराय तवसे तुराय ।
विरप्शिने वज्रिणे शन्तमानि वचांस्यस्मै स्थविराय तक्षुः॥ १० ॥

## दशमी दशतिः

ऋषिः—१, २, ४ द्युतानः; ३ बृहदुक्थः; ५ वामदेवः; ६, ८ वसिष्ठः; ७ विश्वामित्रः;
९ गौरिवीतिः॥ देवता—इन्द्रः॥ छन्दः—१-५, ७-९ त्रिष्टुप्; ६ त्रिपदा
विराडनुष्टुप्॥ स्वरः—१-५, ७-९ धैवतः; ६ गान्धारः॥

३२३. अव द्रप्सो अंशुमतीमतिष्ठदीयानः कृष्णो दशभिः सहस्रैः।
आवत्तमिन्द्रः शच्या धमन्तमप स्नीहितिं नृमणा अधद्राः॥ १॥

३२४. वृत्रस्य त्वा श्वसथादीषमाणा विश्वे देवा अजहुर्ये सखायः।
मरुद्भिरिन्द्र सख्यं ते अस्त्वथेमा विश्वाः पृतना जयासि॥ २॥

३२५. विधुं दद्राणं समने बहूनां युवानं सन्तं पलितो जगार।
देवस्य पश्य काव्यं महित्वाद्या ममार स ह्यः समान॥ ३॥

३२६. त्वं ह त्यत् सप्तभ्यो जायमानोऽशत्रुभ्यो अभवः शत्रुरिन्द्र।
गूढे द्यावापृथिवी अन्वविन्दो विभुमद्भ्यो भुवनेभ्यो रणं धाः॥ ४॥

३२७. मेडिं न त्वा वज्रिणं भृष्टिमन्तं पुरुधस्मानं वृषभं स्थिरप्स्नुम्।
करोष्यर्यस्तरुषीर्दुवस्युरिन्द्र द्युक्षं वृत्रहणं गृणीषे ॥ ५॥

३२८. प्र वो महे महेवृधे भरध्वं प्रचेतसे प्र सुमतिं कृणुध्वम् ।
विशः पूर्वीः प्र चर चर्षणिप्राः ॥ ६॥

३२९. शुनं हुवेम मघवानमिन्द्रमस्मिन् भरे नृतमं वाजसातौ ।
शृण्वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि सञ्जितं धनानि ॥ ७॥

३३०. उदु ब्रह्माण्यैरत श्रवस्येन्द्रं समर्ये महया वसिष्ठ ।
आ यो विश्वानि श्रवसा ततानोपश्रोता म ईवतो वचांसि॥ ८॥

३३१. चक्रं यदस्याप्स्वा निषत्तमुतो तदस्मै मध्विच्चच्छद्यात् ।
पृथिव्यामतिषितं यदूधः पयो गोष्वदधा ओषधीषु ॥ ९॥

## एकादशी दशतिः

ऋषिः—१ अरिष्टनेमिस्ताक्ष्र्यः; २ भरद्वाजः; ३ वसुक्रो विमदो वा; ४-६, ७ विश्वामित्रः;
८ रेणुः; ९ वामदेवः; १० गोतमः॥ देवता—१ ताक्ष्र्यः; २-६, ८-१० इन्द्रः;
७ इन्द्रापर्वतौ॥ छन्दः—त्रिष्टुप्॥ स्वरः—धैवतः॥

३३२. त्यमू षु वाजिनं देवजूतं सहोवानं तरुतारं रथानाम् ।
अरिष्टनेमिं पृतनाजमाशुं स्वस्तये ताक्ष्र्यमिहा हुवेम ॥ १ ॥

३३३. त्रातारमिन्द्रमवितारमिन्द्रं हवेहवे सुहवं शूरमिन्द्रम् ।
हुवे नु शक्रं पुरुहूतमिन्द्रमिदं हविर्मघवा वेत्विन्द्रः ॥ २ ॥

३३४. यजामह इन्द्रं वज्रदक्षिणं हरीणां रथ्यां३ विव्रतानाम् ।
प्र श्मश्रुभिर्दोधुवदूर्ध्वधा भुवद्वि सेनाभिर्भयमानो वि राधसा॥ ३ ॥

३३५. सत्राहणं दाधृषिं तुम्रमिन्द्रं महामपारं वृषभं सुवज्रम् ।
हन्ता यो वृत्रं सनितोत वाजं दाता मघानि मघवा सुराधाः॥ ४ ॥

३३६. यो नो वनुष्यन्नभिदाति मर्त्त उगणा वा मन्यमानस्तुरो वा।
क्षिधी युधा शवसा वा तमिन्द्राभी ष्याम वृषमणस्त्वोताः॥ ५ ॥

३३७. यं वृत्रेषु क्षितयः स्पर्धमाना यं युक्तेषु तुरयन्तो हवन्ते ।
यं शूरसातौ यमपामुपज्मन् यं विप्रासो वाजयन्ते स इन्द्रः॥ ६ ॥

३३८. इन्द्रापर्वता बृहता रथेन वामीरिष आ वहतं सुवीराः ।
वीतं हव्यान्यध्वरेषु देवा वर्धेथां गीर्भिरिडया मदन्ता ॥ ७ ॥

३३९. इन्द्राय गिरो अनिशितसर्गा अपः प्रैरयत् सगरस्य बुध्नात्।
यो अक्षेणेव चक्रियौ शचीभिर्विष्वक्तस्तम्भ पृथिवीमुत द्याम्॥ ८ ॥

३४०. आ त्वा सखायः सख्या ववृत्युस्तिरः पुरू चिदर्णवां जगम्याः।
पितुर्नपातमा दधीत वेधा अस्मिन् क्षये प्रतरां दीद्यानः ॥ ९ ॥

३४१. को अद्य युङ्क्ते धुरि गा ऋतस्य शिमीवतो भामिनो दुर्हृणायून्।
आसन्नेषामप्सुवाहो मयोभून्य एषां भृत्यामृणधत्स जीवात्॥ १० ॥

इति चतुर्थप्रपाठकस्य प्रथमोऽर्धः॥

# अथ चतुर्थप्रपाठकस्य द्वितीयोऽर्धः

## द्वादशी दशतिः

ऋषिः—१ मधुच्छन्दाः; २ जेता माधुच्छन्दसः; ३, ६ गोतमः; ४ अत्रिः; ५, ८, ९ तिरश्चीः; ७ काण्वो नीपातिथिः; १० शंयुर्बार्हस्पत्यः॥ देवता—इन्द्रः॥
छन्दः—अनुष्टुप्॥ स्वरः—गान्धारः॥

३४२. गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः ।
ब्रह्माणस्त्वा शतक्रत उद्वंशमिव येमिरे ॥ १ ॥

३४३. इन्द्रं विश्वा अवीवृधन्त्समुद्रव्यचसं गिरः ।
रथीतमं रथीनां वाजानां सत्पतिं पतिम् ॥ २ ॥

३४४. इममिन्द्र सुतं पिब ज्येष्ठममर्त्यं मदम् ।
शुक्रस्य त्वाभ्यक्षरन् धारा ऋतस्य सादने ॥ ३ ॥

३४५. यदिन्द्र चित्र म इह नास्ति त्वादातमद्रिवः ।
राधस्तन्नो विदद्वस उभयाहस्त्या भर ॥ ४ ॥

३४६. श्रुधी हवं तिरश्च्या इन्द्र यस्त्वा सपर्यति ।
सुवीर्यस्य गोमतो रायस्पूर्धि महाँ असि ॥ ५ ॥

३४७. असावि सोम इन्द्र ते शविष्ठ धृष्णवा गहि ।
आ त्वा पृणक्त्विन्द्रियं रजः सूर्यो न रश्मिभिः॥ ६ ॥

३४८. एन्द्र याहि हरिभिरुप कण्वस्य सुष्टुतिम् ।
दिवो अमुष्य शासतो दिवं यय दिवावसो ॥ ७ ॥

३४९. आ त्वा गिरो रथीरिवास्थुः सुतेषु गिर्वणः ।
अभि त्वा समनूषत गावो वत्सं न धेनवः ॥ ८ ॥

३५०. एतो न्विन्द्रं स्तवाम शुद्धं शुद्धेन साम्ना ।
शुद्धैरुक्थैर्वावृध्वांसं शुद्धैराशीर्वान् ममत्तु ॥ ९ ॥

३५१. यो रयिं वो रयिन्तमो यो द्युम्नैर्द्युम्नवत्तमः ।
सोमः सुतः स इन्द्र तेऽस्ति स्वधापते मदः ॥ १० ॥

इति तृतीयोऽध्यायः॥

१५४७. कृष्णां यदेनीमभि वर्पसाभूज्जनयन्योषां बृहतः पितुर्जाम् ।
ऊर्ध्वं भानुं सूर्यस्य स्तभायन् दिवो वसुभिररतिर्वि भाति ॥ २ ॥

१५४८. भद्रो भद्रया सचमान आगात् स्वसारं जारो अभ्येति पश्चात्।
सुप्रकेतैर्द्युभिरग्निर्वितिष्ठन् रुशद्भिर्वर्णैरभि राममस्थात् ॥ ३ ॥

( ६ )

ऋषिः—उशनाः काव्यः ॥ देवता—अग्निः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१५४९. कया ते अग्ने अङ्गिर ऊर्जो नपादुपस्तुतिम्। वराय देव मन्यवे ॥ १ ॥

१५५०. दाशेम कस्य मनसा यज्ञस्य सहसो यहो। कदु वोच इदं नमः ॥ २ ॥

१५५१. अधा त्वं हि नस्करो विश्वा अस्मभ्यं सुक्षितीः। वाजद्रविणसो गिरः ॥ ३ ॥

( ७ )

ऋषिः—भर्गः प्रागाथः ॥ देवता—अग्निः ॥ छन्दः—बार्हतः प्रगाथः ( १ बृहती, २ सतोबृहती )॥ स्वरः—१ मध्यमः; २ पञ्चमः ॥

१५५२. अग्न आ याह्यग्निभिर्होतारं त्वा वृणीमहे ।
आ त्वामनक्तु प्रयता हविष्मती यजिष्ठं बर्हिरासदे ॥ १ ॥

१५५३. अच्छा हि त्वा सहसः सूनो अङ्गिरः स्रुचश्चरन्त्यध्वरे ।
ऊर्जो नपातं घृतकेशमीमहेऽग्निं यज्ञेषु पूर्व्यम् ॥ २ ॥

( ८ )

ऋषिः—सुदीतिपुरुमीढौ तयोर्वान्यतरः ॥ देवता—अग्निः ॥ छन्दः—बार्हतः प्रगाथः ( १ बृहती, २ सतोबृहती )॥ स्वरः—१ मध्यमः; २ पञ्चमः ॥

१५५४. अच्छा नः शीरशोचिषं गिरो यन्तु दर्शतम् ।
अच्छा यज्ञासो नमसा पुरूवसुं पुरुप्रशस्तमूतये ॥ १ ॥

१५५५. अग्निं सूनुं सहसो जातवेदसं दानाय वार्याणाम् ।
द्विता यो भूदमृतो मर्त्येष्वा होता मन्द्रतमो विशि ॥ २ ॥

( ९ )

ऋषिः—विश्वामित्रः ॥ देवता—अग्निः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१५५६. अदाभ्यः पुरएता विशामग्निर्मानुषीणाम्। तूर्णी रथः सदा नवः ॥ १ ॥

१५५७. अभि प्रयांसि वाहसा दाश्वाँ अश्नोति मर्त्यः। क्षयं पावकशोचिषः ॥ २ ॥

१५५८. साह्वान् विश्वा अभियुजः क्रतुर्देवानाममृक्तः। अग्निस्तुविश्रवस्तमः॥ ३॥

( १० )

ऋषिः—सोभरिः काण्वः॥ देवता—अग्निः॥ छन्दः—काकुभः प्रगाथः ( १ ककुबुष्णिक्, २ सतोबृहती )॥ स्वरः—१ ऋषभः; २ पञ्चमः॥

१५५९. भद्रो नो अग्निराहुतो भद्रा रातिः सुभग भद्रो अध्वरः।
भद्रा उत प्रशस्तयः॥ १॥

१५६०. भद्रं मनः कृणुष्व वृत्रतूर्ये येना समत्सु सासहिः।
अव स्थिरा तनुहि भूरि शर्धतां वनेमा ते अभिष्टये॥ २॥

( ११ )

ऋषिः—गोतमो राहूगणः॥ देवता—अग्निः॥ छन्दः—उष्णिक्॥ स्वरः—ऋषभः॥

१५६१. अग्ने वाजस्य गोमत ईशानः सहसो यहो।
अस्मे देहि जावेदो महि श्रवः॥ १॥

१५६२. स इधानो वसुष्कविरग्निरीडेन्यो गिरा।
रेवदस्मभ्यं पुर्वणीक दीदिहि॥ २॥

१५६३. क्षपो राजन्नुत त्मनाग्ने वस्तोरुतोषसः।
स तिग्मजम्भ रक्षसो दह प्रति॥ ३॥

( १२ )

ऋषिः—गोपवन आत्रेयः॥ देवता—अग्निः॥ छन्दः—आनुष्टुभः प्रगाथः ( १ अनुष्टुप्; २-३ गायत्री )॥ स्वरः—१ गान्धारः; २-३ षड्जः॥

१५६४. विशोविशो वो अतिथिं वाजयन्तः पुरुप्रियम्।
अग्निं वो दुर्यं वच स्तुषे शूषस्य मन्मभिः॥ १॥

१५६५. यं जनासो हविष्मन्तो मित्रं न सर्पिरासुतिम्।
प्रशंसन्ति प्रशस्तिभिः॥ २॥

१५६६. पन्यांसं जातवेदसं यो देवतात्युद्यता।
हव्यान्यैरयद् दिवि॥ ३॥

( १३ )

ऋषिः—भरद्वाजो बार्हस्पत्यो वीतहव्यो वा ॥ देवता—अग्निः ॥ छन्दः—जगती ॥
स्वरः—निषादः ॥

१५६७. समिद्धमग्निं समिधा गिरा गृणे शुचिं पावकं पुरो अध्वरे ध्रुवम्।
विप्रं होतारं पुरुवारमद्रुहं कविं सुम्नैरीमहे जातवेदसम्॥ १ ॥

१५६८. त्वां दूतमग्ने अमृतं युगेयुगे हव्यवाहं दधिरे पायुमीड्यम्।
देवासश्च मर्त्तासश्च जागृविं विभुं विश्पतिं नमसा नि षेदिरे॥ २ ॥

१५६९. विभूषन्नग्न उभयाँ अनु व्रता दूतो देवानां रजसी समीयसे।
यत्ते धीतिं सुमतिमावृणीमहेऽध स्मा नस्त्रिवरूथः शिवो भव॥ ३ ॥

( १४ )

ऋषिः—प्रयोगो भार्गवः; पावकोऽग्निर्बार्हस्पत्यो वा, गृहपतियविष्ठौ सहसः सुतौ
तयोर्वान्यतरो वा॥ देवता—अग्निः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१५७०. उप त्वा जामयो गिरो देदिशतीर्हविष्कृतः। वायोरनीके अस्थिरन्॥ १ ॥

१५७१. यस्य त्रिधात्ववृतं बर्हिस्तस्थावसन्दिनम्। आपश्चिन्नि दधा पदम्॥ २ ॥

१५७२. पदं देवस्य मीढुषोऽनाधृष्टाभिरूतिभिः। भद्रा सूर्यइवोपदृक्॥ ३ ॥

इति पञ्चदशोऽध्यायः, सप्तमप्रपाठकस्य द्वितीयोऽर्धः ॥

# अथ षोडशोऽध्यायः

## सप्तमप्रपाठकस्य तृतीयोऽर्धः

( १ )

ऋषिः—मेधातिथिः काण्वः ॥ देवता—इन्द्रः ॥ छन्दः—बार्हतः प्रगाथः ( १ बृहती, २ सतोबृहती )॥ स्वरः—१ मध्यमः; २ पञ्चमः ॥

१५७३. अभि त्वा पूर्वपीतये इन्द्र स्तोमेभिरायवः ।
समीचीनास ऋभवः समस्वरन् रुद्रा गृणन्त पूर्व्यम् ॥ १ ॥

१५७४. अस्येदिन्द्रो वावृधे वृष्ण्यं शवो मदे सुतस्य विष्णवि ।
अद्या तमस्य महिमानमायवोऽनु ष्टुवन्ति पूर्वथा ॥ २ ॥

( २ )

ऋषिः—विश्वामित्रः ॥ देवता—इन्द्राग्नी ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१५७५. प्र वामर्चन्त्युक्थिनो नीथाविदो जरितारः । इन्द्राग्नी इष आ वृणे ॥ १ ॥

१५७६. इन्द्राग्नी नवतिं पुरो दासपत्नीरधूनुतम् । साकमेकेन कर्मणा ॥ २ ॥

१५७७. इन्द्राग्नी अपसस्पर्युप प्र यन्ति धीतयः । ऋतस्य पथ्या३ अनु ॥ ३ ॥

१५७८. इन्द्राग्नी तविषाणि वां सधस्थानि प्रयांसि च । युवोरप्तूर्यं हितम् ॥ ४ ॥

( ३ )

ऋषिः—भर्गः प्रागाथः ॥ देवता—इन्द्रः ॥ छन्दः—बार्हतः प्रगाथः ( १ बृहती, २ सतोबृहती )॥ स्वरः—१ मध्यमः; २ पञ्चमः ॥

१५७९. शग्ध्यू३ षु शचीपत इन्द्र विश्वाभिरूतिभिः ।
भगं न हि त्वा यशसं वसुविदमनु शूर चरामसि ॥ १ ॥

१५८०. पौरो अश्वस्य पुरुकृद्गवामस्युत्सो देव हिरण्ययः ।
न किर्हि दानं परिमर्धिषत् त्वे यद्यद्यामि तदा भर ॥ २ ॥

( ४ )

ऋषिः—भर्गः प्रागाथः ॥ देवता—इन्द्रः ॥ छन्दः—बार्हतः प्रगाथः ( १ बृहती, २ सतोबृहती )॥ स्वरः—१ मध्यमः; २ पञ्चमः ॥

१५८१. त्वं ह्येहि चेरवे विदा भगं वसुत्तये ।
उद्वावृषस्व मघवन् गविष्टय उदिन्द्राश्वमिष्टये ॥ १ ॥

१५८२. त्वं पुरू सहस्राणि शतानि च यूथा दानाय मंहसे ।
आ पुरन्दरं चकृम विप्रवचस इन्द्रं गायन्तोऽवसे ॥ २ ॥

( ५ )

ऋषिः—सोभरिः काण्वः ॥ देवता—अग्निः ॥ छन्दः—बार्हतः प्रगाथः ( १ बृहती, २ सतोबृहती )॥ स्वरः—१ मध्यमः; २ पञ्चमः ॥

१५८३. यो विश्वा दयते वसु होता मन्द्रो जनानाम् ।
मधोर्न पात्रा प्रथमान्यस्मै प्र स्तोमा यन्त्वग्नये ॥ १ ॥

१५८४. अश्वं न गीर्भी रथ्यं सुदानवो मर्मृज्यन्ते देवयवः ।
उभे तोके तनये दस्म विश्पते पर्षि राधो मघोनाम् ॥ २ ॥

( ६ )

ऋषिः—शुनःशेप आजीगर्तिः ॥ देवता—वरुणः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१५८५. इमं मे वरुण श्रुधी हवमद्या च मृडय ।
त्वामवस्युरा चके ॥ १ ॥

( ७ )

ऋषिः—सुकक्षः ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१५८६. कया त्वं न ऊत्याभि प्र मन्दसे वृषन् ।
कया स्तोतृभ्य आ भर ॥ १ ॥

( ८ )

ऋषिः—मेधातिथिः काण्वः ॥ देवता—इन्द्रः ॥ छन्दः—बार्हतः प्रगाथः ( १ बृहती, २ सतोबृहती )॥ स्वरः—१ मध्यमः; २ पञ्चमः ॥

१५८७. इन्द्रमिद्देवतातय इन्द्रं प्रयत्यध्वरे ।
इन्द्रं समीके वनिनो हवामह इन्द्रं धनस्य सातये ॥ १ ॥

१५८८. इन्द्रो मह्ना रोदसी पप्रथच्छव इन्द्रः सूर्यमरोचयत् ।
इन्द्रे ह विश्वा भुवनानि येमिर इन्द्रे स्वानास इन्दवः ॥ २ ॥

( ९ )

ऋषिः—विश्वकर्मा भौवनः ॥ देवता—विश्वकर्मा ॥ छन्दः—त्रिष्टुप् ॥ स्वरः—धैवतः ॥

१५८९. विश्वकर्मन् हविषा वावृधानः स्वयं यजस्व तन्वा३ं स्वाहिते ।
मुह्यन्त्वन्ये अभितो जनास इहास्माकं मघवा सूरिरस्तु ॥ १ ॥

( १० )

ऋषिः—अनानतः पारुच्छेर्पिः ॥ देवता—पवमानः सोमः ॥ छन्दः—अत्यष्टिः ॥ स्वरः—गान्धारः ॥

१५९०. अया रुचा हरिण्या पुनानो विश्वा द्वेषांसि
तरति सयुग्वभिः सूरो न सयुग्वभिः ।
धारा पृष्ठस्य रोचते पुनानो अरुषो हरिः ।
विश्वा यद्रूपा परियास्यृक्वभिः सप्तास्येभिर्ऋक्वभिः ॥ १ ॥

१५९१. प्राचीमनु प्रदिशं याति चेकितत्सं रश्मिभिर्यतते
दर्शतो रथो दैव्यो दर्शतो रथः ।
अग्मन्नुक्थानि पौंस्येन्द्रं जैत्राय हर्षयन् ।
वज्रश्च यद्भवथो अनपच्युता समत्स्वनपच्युता ॥ २ ॥

१५९२. त्वं ह त्यत्पणीनां विदो वसु सं मातृभिर्मर्जयसि
स्व आ दम ऋतस्य धीतिभिर्दमे ।
परावतो न साम तद्यत्रा रणन्ति धीतयः ।
त्रिधातुभिररुषीभिर्वयो दधे रोचमानो वयो दधे ॥ ३ ॥

( ११ )

ऋषिः—भरद्वाजो बार्हस्पत्यः ॥ देवता—पूषा ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१५९३. उत नो गोषणिं धियमश्वसां वाजसामुत। नृवत्कृणुह्यूतये ॥ १ ॥

( १२ )

ऋषिः—गोतमो राहूगणः ॥ देवता—मरुतः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१५९४. शशमानस्य वा नरः स्वेदस्य सत्यशवसः। विदा कामस्य वेनतः ॥ १ ॥

( १३ )

ऋषिः—ऋजिश्वाः ॥ देवता—विश्वदेवाः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१५९५. उप नः सूनवो गिरः शृण्वन्त्वमृतस्य ये। सुमृडीका भवन्तु नः ॥ १ ॥

( १४ )

ऋषिः—वामदेवः ॥ देवता—द्यावापृथिव्यौ ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१५९६. प्र वां महि द्यवी अभ्युपस्तुतिं भरामहे। शुची उप प्रशस्तये ॥ १ ॥

१५९७. पुनाने तन्वा मिथः स्वेन दक्षेण राजथः। ऊह्याथे सनादृतम् ॥ २ ॥

१५९८. मही मित्रस्य साधथस्तरन्ती पिप्रती ऋतम्। परि यज्ञं नि षेदथुः ॥ ३ ॥

( १५ )

ऋषिः—शुनःशेप आजीगर्तिः ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥
स्वरः—षड्जः ॥

१५९९. अयमु ते समतसि कपोतइव गर्भधिम्। वचस्तच्चिन्न ओहसे ॥ १ ॥

१६००. स्तोत्रं राधानां पते गिर्वाहो वीर यस्य ते। विभूतिरस्तु सूनृता ॥ २ ॥

१६०१. ऊर्ध्वस्तिष्ठा न ऊतयेऽस्मिन् वाजे शतक्रतो। समन्येषु ब्रवावहै ॥ ३ ॥

( १६ )

ऋषिः—हर्यतः प्रागाथः ॥ देवता—अग्निर्हवींषि वा ॥ छन्दः—गायत्री ॥
स्वरः—षड्जः ॥

१६०२. गाव उप वदावटे मही यज्ञस्य रप्सुदा। उभा कर्णा हिरण्यया ॥ १ ॥

१६०३. अभ्यारमिदद्रयो निषिक्तं पुष्करे मधु। अवटस्य विसर्जने ॥ २ ॥

१६०४. सिञ्चन्ति नमसावटमुच्चाचक्रं परिज्मानम्। नीचीनवारमक्षितम् ॥ ३ ॥

( १७ )

ऋषिः—देवातिथिः काण्वः ॥ देवता—इन्द्रः ॥ छन्दः—बार्हतः प्रगाथः ( १ बृहती, २ सतोबृहती ) ॥ स्वरः—१ मध्यमः; २ पञ्चमः ॥

१६०५. मा भेम मा श्रमिष्मोग्रस्य सख्ये तव ।
महत्ते वृष्णो अभिचक्ष्यं कृतं पश्येम तुर्वशं यदुम् ॥ १ ॥

१६०६. सव्यामनु स्फिग्यं वावसे वृषा न दानो अस्य रोषति।
मध्वा सम्पृक्ताः सारघेण धेनवस्तूयमेहि द्रवा पिब ॥ २ ॥

( १८ )

ऋषिः—मेधातिथिः काण्वः ॥ देवता—इन्द्रः ॥ छन्दः—बार्हतः प्रगाथः ( १ बृहती, २ सतोबृहती ) ॥ स्वरः—१ मध्यमः; २ पञ्चमः ॥

१६०७. इमा उ त्वा पुरूवसो गिरो वर्धन्तु या मम ।
पावकवर्णाः शुचयो विपश्चितोऽभि स्तोमैरनूषत ॥ १ ॥

१६०८. अयं सहस्रमृषिभिः सहस्कृतः समुद्रइव पप्रथे ।
सत्यः सो अस्य महिमा गृणे शवो यज्ञेषु विप्रराज्ये ॥ २ ॥

( १९ )

ऋषिः—श्रुष्टिगुः काण्वः ॥ देवता—इन्द्रः ॥ छन्दः—बार्हतः प्रगाथः ( १ बृहती, २ सतोबृहती )॥ स्वरः—१ मध्यमः; २ पञ्चमः ॥

१६०९. यस्यायं विश्व आर्यो दासः शेवधिपा अरिः ।
तिरश्चिदर्ये रुशमे पवीरवि तुभ्येत् सो अज्यते रयिः ॥ १ ॥

१६१०. तुरण्यवो मधुमन्तं घृतश्चुतं विप्रासो अर्कमानृचुः ।
अस्मे रयिः पप्रथे वृष्ण्यं शवोऽस्मे स्वानास इन्दवः ॥ २ ॥

( २० )

ऋषिः—पर्वतनारदौ ॥ देवता—पवमानः सोमः ॥ छन्दः—उष्णिक् ॥ स्वरः—ऋषभः ॥

१६११. गोमन्न इन्दो अश्ववत् सुतः सुदक्ष धनिव ।
शुचिं च वर्णमधि गोषु धारय ॥ १ ॥

१६१२. स नो हरीणां पत इन्दो देवप्सरस्तमः ।
सखेव सख्ये नर्यो रुचे भव ॥ २ ॥

१६१३. सनेमि त्वमस्मदा अदेवं कं चिदत्रिणम् ।
साह्वाँ इन्दो परि बाधो अप द्वयुम् ॥ ३ ॥

( २१ )

ऋषिः—अत्रिः ॥ देवता—पवमानः सोमः ॥ छन्दः—जगती ॥ स्वरः—निषादः ॥

१६१४. अञ्जते व्यञ्जते समञ्जते क्रतुं रिहन्ति मध्वाभ्यञ्जते ।
सिन्धोरुच्छ्वासे पतयन्तमुक्षणं हिरण्यपावाः पशुमप्सु गृभ्णते ॥ १ ॥

१६१५. विपश्चिते पवमानाय गायत मही न धारात्यन्धो अर्षति ।
अहिर्न जूर्णामति सर्पति त्वचमत्यो न क्रीडन्नसरद् वृषा हरिः ॥ २ ॥

१६१६. अग्रेगो राजाप्यस्तविष्यते विमानो अह्नां भुवनेष्वर्पितः ।
हरिर्घृतस्नुः सुदृशीको अर्णवो ज्योतीरथः पवते राय ओक्यः ॥ ३ ॥

इति षोडशोऽध्यायः, सप्तमप्रपाठकश्च समाप्तः ॥

# अथ सप्तदशोऽध्यायः

## अष्टमप्रपाठकस्य प्रथमोऽर्धः

( १ )

ऋषिः—शुनःशेप आजीगर्तिः ॥ देवता—अग्निः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१६१७. विश्वेभिरग्ने अग्निभिरिमं यज्ञमिदं वचः । चनो धाः सहसो यहो ॥ १ ॥

१६१८. यच्चिद्धि शश्वता तना देवंदेवं यजामहे । त्वे इद्धूयते हविः ॥ २ ॥

१६१९. प्रियो नो अस्तु विश्पतिर्होता मन्द्रो वरेण्यः । प्रियाः स्वग्नयो वयम् ॥ ३ ॥

( २ )

ऋषिः—मधुच्छन्दा वैश्वामित्रः ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१६२०. इन्द्रं वो विश्वतस्परि हवामहे जनेभ्यः । अस्माकमस्तु केवलः ॥ १ ॥

१६२१. स नो वृषन्नमुं चरुं सत्रादावन्नपा वृधि । अस्मभ्यमप्रतिष्कुतः ॥ २ ॥

१६२२. वृषा यूथेव वंसगः कृष्टीरियर्त्योजसा । ईशानो अप्रतिष्कुतः ॥ ३ ॥

( ३ )

ऋषिः—शंयुर्बार्हस्पत्यः ॥ देवता—अग्निः ॥ छन्दः—बार्हतः प्रगाथः ( १ बृहती, २ सतोबृहती ) ॥ स्वरः—१ मध्यमः; २ पञ्चमः ॥

१६२३. त्वं नश्चित्र ऊत्या वसो राधांसि चोदय ।
अस्य रायस्त्वमग्ने रथीरसि विदा गाधं तुचे तु नः ॥ १ ॥

१६२४. पर्षि तोकं तनयं पर्तृभिष्ट्वमदब्धैरप्रयुत्वभिः ।
अग्ने हेडांसि दैव्या युयोधि नोऽदेवानि ह्वरांसि च ॥ २ ॥

( ४ )

ऋषिः—वसिष्ठः ॥ देवता—विष्णुः ॥ छन्दः—त्रिष्टुप् ॥ स्वरः—धैवतः ॥

१६२५. किमित्ते विष्णो परिचक्षि नाम प्र यद्ववक्षे शिपिविष्टो अस्मि ।
मा वर्पो अस्मदप गूह एतद्यदन्यरूपः समिथे बभूथ ॥ १ ॥

१६२६. प्र तत्ते अद्य शिपिविष्ट हव्यमर्यः शंसामि वयुनानि विद्वान् ।
तं त्वा गृणामि तवसमतव्यान् क्षयन्तमस्य रजसः पराके ॥ २ ॥

१६२७. वषट् ते विष्णवास आ कृणोमि तन्मे जुषस्व शिपिविष्ट हव्यम् ।
वर्धन्तु त्वा सुष्टुतयो गिरो मे यूयं पात स्वस्तिभिः सदा नः ॥ ३ ॥

(५)

ऋषिः—वामदेवः ॥ देवता—१ वायुः; २-३ इन्द्रवायू ॥ छन्दः—अनुष्टुप् ॥ स्वरः—गान्धारः ॥

१६२८. वायो शुक्रो अयामि ते मध्वो अग्रं दिविष्टिषु ।
आ याहि सोमपीतये स्पार्हो देव नियुत्वता ॥ १ ॥

१६२९. इन्द्रश्च वायवेषां सोमानां पीतिमर्हथः ।
युवां हि यन्तीन्दवो निम्नमापो न सध्र्यक् ॥ २ ॥

१६३०. वायविन्द्रश्च शुष्मिणा सरथं शवसस्पती ।
नियुत्वन्ता न ऊतय आ यातं सोमपीतये ॥ ३ ॥

(६)

ऋषिः—रेभसूनू काश्यपौ ॥ देवता—पवमानः सोमः ॥ छन्दः—अनुष्टुप् ॥ स्वरः—गान्धारः ॥

१६३१. अध क्षपा परिष्कृतो वाजाँ अभि प्र गाहसे ।
यदी विवस्वतो धियो हरिं हिन्वन्ति यातवे ॥ १ ॥

१६३२. तमस्य मर्जयामसि मदो य इन्द्रपातमः ।
यं गाव आसभिर्दधुः पुरा नूनं च सूरयः ॥ २ ॥

१६३३. तं गाथया पुराण्या पुनानमभ्यनूषत ।
उतो कृपन्त धीतयो देवानां नाम बिभ्रतीः ॥ ३ ॥

(७)

ऋषिः—शुनःशेप आजीगर्तिः ॥ देवता—अग्निः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१६३४. अश्वं न त्वा वारवन्तं वन्दध्या अग्निं नमोभिः । सम्राजन्तमध्वराणाम् ॥ १ ॥

१६३५. स घा नः सूनुः शवसा पृथुप्रगामा सुशेवः । मीढ्वाँ अस्माकं बभूयात् ॥ २ ॥

१६३६. स नो दूराच्चासाच्च नि मर्त्यादघायोः । पाहि सदमिद्विश्वायुः ॥ ३ ॥

(८)

ऋषिः—नृमेधः ॥ देवता—इन्द्रः ॥ छन्दः—बार्हतः प्रगाथः (१ बृहती, २ सतोबृहती) ॥ स्वरः—१ मध्यमः; २ पञ्चमः ॥

१६३७. त्वमिन्द्र प्रतूर्तिष्वभि विश्वा असि स्पृधः ।
अशस्तिहा जनिता वृत्रतूरसि त्वं तूर्य तरुष्यतः ॥ १ ॥

१६३८. अनु ते शुष्मं तुरयन्तमीयतुः क्षोणी शिशुं न मातरा ।
विश्वास्ते स्पृधः श्नथयन्त मन्यवे वृत्रं यदिन्द्र तूर्वसि ॥ २ ॥

(९)

ऋषिः—गोषूक्त्यश्वसूक्तिनौ काण्वायनौ ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥
स्वरः—षड्जः ॥

१६३९. यज्ञ इन्द्रमवर्धयद् यद्भूमिं व्यवर्तयत् ।
चक्राण ओपशं दिवि ॥ १ ॥

१६४०. व्या३न्तरिक्षमतिरन् मदे सोमस्य रोचना ।
इन्द्रो यदभिनद्वलम् ॥ २ ॥

१६४१. उद्गा आजदङ्गिरोभ्य आविष्कृण्वन्गुहा सतीः ।
अर्वाञ्चं नुनुदे वलम् ॥ ३ ॥

(१०)

ऋषिः—श्रुतकक्षः सुकक्षो वा आङ्गिरसः ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥
स्वरः—षड्जः ॥

१६४२. त्यमु वः सत्रासाहं विश्वासु गीर्ष्वायतम् । आ च्यावयस्यूतये ॥ १ ॥

१६४३. युध्मं सन्तमनर्वाणं सोमपामनपच्युतम् । नरमवार्यक्रतुम् ॥ २ ॥

१६४४. शिक्षा ण इन्द्र राय आ पुरु विद्वाँ ऋचीषम । अवा नः पार्ये धने ॥ ३ ॥

(११)

ऋषिः—गोषूक्त्यश्वसूक्तिनौ काण्वायनौ ॥ देवता—इन्द्रः ॥ छन्दः—उष्णिक् ॥ स्वरः—ऋषभः ॥

१६४५. तव त्यदिन्द्रियं बृहत्तव दक्षमुत क्रतुम् ।
वज्रं शिशाति धिषणा वरेण्यम् ॥ १ ॥

१६४६. तव द्यौरिन्द्र पौंस्यं पृथिवी वर्धति श्रवः ।
त्वामापः पर्वतासश्च हिन्विरे ॥ २ ॥

१६४७. त्वां विष्णुर्बृहन् क्षयो मित्रो गृणाति वरुणः ।
त्वां शर्धो मदत्यनु मारुतम् ॥ ३ ॥

( १२ )

ऋषिः—विरूप आङ्गिरसः॥ देवता—अग्निः॥ छन्दः—गायत्री॥ स्वरः—षड्जः॥

१६४८. नमस्ते अग्न ओजसे गृणन्ति देव कृष्टयः। अमैरमित्रमर्दय॥ १॥

१६४९. कुवित्सु नो गविष्टयेऽग्ने संवेषिषो रयिम्। उरुकृदुरु णस्कृधि॥ २॥

१६५०. मा नो अग्ने महाधने परा वग्भारभृद्यथा। संवर्गं सं रयिं जय॥ ३॥

( १३ )

ऋषिः—वत्सः काण्वः॥ देवता—इन्द्रः॥ छन्दः—गायत्री॥ स्वरः—षड्जः॥

१६५१. समस्य मन्यवे विशो विश्वा नमन्त कृष्टयः। समुद्रायेव सिन्धवः॥ १॥

१६५२. वि चिद्वृत्रस्य दोधतः शिरो बिभेद वृष्णिना। वज्रेण शतपर्वणा॥ २॥

१६५३. ओजस्तदस्य तित्विष उभे यत्समवर्त्तयत्। इन्द्रश्चर्मेव रोदसी॥ ३॥

( १४ )

ऋषिः—शुनःशेप आजीगर्तिः॥ देवता—इन्द्रः॥ छन्दः—१ एकपदापङ्क्तिः;
२-३ गायत्री॥ स्वरः—१ पञ्चमः; २-३ षड्जः॥

१६५४. सुमन्मा वस्वी रन्ती सूनरी ॥ १॥

१६५५. सरूप वृषन्ना गहीमौ भद्रौ धुर्यावभि। ताविमा उप सर्पतः॥ २॥

१६५६. नीव शीर्षाणि मृढ्वं मध्य आपस्य तिष्ठति। शृङ्गेभिर्दशभिर्दिशन्॥ ३॥

इति सप्तदशोऽध्यायः, अष्टमप्रपाठकस्य प्रथमोऽर्धः॥

# अथाष्टादशोऽध्यायः

## अष्टमप्रपाठकस्य द्वितीयोऽर्धः

( १ )

ऋषिः—मेधातिथिः काण्वः प्रियमेधश्चाङ्गिरसः ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१६५७. पन्यंपन्यमित् सोतार आ धावत मद्याय। सोमं वीराय शूराय॥ १ ॥

१६५८. एह हरी ब्रह्मयुजा शग्मा वक्षतः सखायम्। इन्द्रं गीर्भिर्गिर्वणसम्॥ २ ॥

१६५९. पाता वृत्रहा सुतमा घा गमन्नारे अस्मत्। नि यमते शतमूतिः॥ ३ ॥

( २ )

ऋषिः—श्रुतकक्षः सुकक्षो वा ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१६६०. आ त्वा विशन्त्विन्दवः समुद्रमिव सिन्धवः ।
न त्वामिन्द्राति रिच्यते ॥ १ ॥

१६६१. विव्यक्थ महिना वृषन्भक्षं सोमस्य जागृवे। य इन्द्र जठरेषु ते॥ २ ॥

१६६२. अरं त इन्द्र कुक्षये सोमो भवतु वृत्रहन्। अरं धामभ्य इन्दवः॥ ३ ॥

( ३ )

ऋषिः—शुनःशेप आजीगर्तिः ॥ देवता—अग्निः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१६६३. जराबोध तद्विविड्ढि विशेविशे यज्ञियाय। स्तोमं रुद्राय दृशीकम्॥ १ ॥

१६६४. स नो महाँ अनिमानो धूमकेतुः पुरुश्चन्द्रः। धिये वाजाय हिन्वतु॥ २ ॥

१६६५. स रेवाँइव विश्पतिर्दैव्यः केतुः शृणोतु नः। उक्थैरग्निर्बृहद्भानुः॥ ३ ॥

( ४ )

ऋषिः—शंयुर्बार्हस्पत्यः ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१६६६. तद्वो गाय सुते सचा पुरुहूताय सत्वने। शं यद् गवे न शाकिने॥ १ ॥

१६६७. न घा वसुर्नि यमते दानं वाजस्य गोमतः। यत् सीमुपश्रवद्गिरः॥ २ ॥

१६६८. कुवित्सस्य प्र हि व्रजं गोमन्तं दस्युहा गमत्। शचीभिरप नो वरत्॥ ३ ॥

( ५ )

ऋषिः—मेधातिथिः ॥ देवता—विष्णुः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१६६९. इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम् ।
समूढमस्य पांसुले ॥ १ ॥

१६७०. त्रीणि पदा वि चक्रमे विष्णुर्गोपा अदाभ्यः ।
अतो धर्माणि धारयन् ॥ २ ॥

१६७१. विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे ।
इन्द्रस्य युज्यः सखा ॥ ३ ॥

१६७२. तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः ।
दिवीव चक्षुराततम् ॥ ४ ॥

१६७३. तद्विप्रासो विपन्युवो जागृवांसः समिन्धते ।
विष्णोर्यत्परमं पदम् ॥ ५ ॥

१६७४. अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे ।
पृथिव्या अधि सानवि ॥ ६ ॥

( ६ )

ऋषिः—वसिष्ठः ॥ देवता—इन्द्रः ॥ छन्दः—बार्हतः प्रगाथः ( १ बृहती, २ सतोबृहती )॥
स्वरः—१ मध्यमः; २ पञ्चमः ॥

१६७५. मो षु त्वा वाघतश्च नारे अस्मन्नि रीरमन् ।
आरात्ताद्वा सधमादं न आ गहीह वा सन्नुप श्रुधि ॥ १ ॥

१६७६. इमे हि ते ब्रह्मकृतः सुते सचा मधौ न मक्ष आसते ।
इन्द्रे कामं जरितारो वसूयवो रथे न पादमा दधुः ॥ २ ॥

( ७ )

ऋषिः—आयुः काण्वः ॥ देवता—इन्द्रः ॥ छन्दः—बार्हतः प्रगाथः ( १ बृहती,
२ सतोबृहती )॥ स्वरः—१ मध्यमः; २ पञ्चमः ॥

१६७७. अस्तावि मन्म पूर्व्यं ब्रह्मेन्द्राय वोचत ।
पूर्वीर्ऋतस्य बृहतीरनूषत स्तोतुर्मेधा असृक्षत ॥ १ ॥

१६७८. समिन्द्रो रायो बृहतीरधूनुत सं क्षोणी समु सूर्यम् ।
सं शुक्रासः शुचयः सं गवाशिरः सोमा इन्द्रममन्दिषुः ॥ २ ॥

(८)

ऋषिः—अम्बरीष ऋजिश्वा च॥ देवता—पवमानः सोमः॥ छन्दः—अनुष्टुप्॥
स्वरः—गान्धारः॥

१ २ ३ १ २ ३ १ २र
१६७९. इन्द्राय सोम पातवे वृत्रघ्ने परि षिच्यसे ।
१२ ३ १ २ ३ १ २ ३ १ २
नरे च दक्षिणावते वीराय सदनासदे ॥ १ ॥
१ २ ३ १ २ ३ २ ३ १ २ ३१ २
१६८०. तं सखायः पुरूरुचं वयं यूयं च सूरयः ।
३ २ ३ १ २ ३ २ ३ १ २
अश्याम वाजगन्ध्यं सनेम वाजपस्त्यम् ॥ २ ॥
२ ३ १ २ ३ १ २र ३ १ २ ३ १२
१६८१. परि त्यं हर्यतं हरिं बभ्रुं पुनन्ति वारेण ।
२ ३ २उ ३ २उ ३ १ २ ३१ २र
यो देवान्विश्वाँ इत् परि मदेन सह गच्छति ॥ ३ ॥

(९)

ऋषिः—वसिष्ठः॥ देवता—इन्द्रः॥ छन्दः—बार्हतः प्रगाथः (१ बृहती, २ सतोबृहती)॥
स्वरः—१ मध्यमः; २ पञ्चमः॥

१ २र ३ १ २र
१६८२. कस्तमिन्द्र त्वा वसवा मर्त्यो दधर्षति ।
३ १ २र ३ १ २ ३ २ ३ १ २र
श्रद्धा हि ते मघवन् पार्ये दिवि वाजी वाजं सिषासति ॥ १ ॥
३ १ २ ३१ २ ३ १ २र ३ १ २र
१६८३. मघोनः स्म वृत्रहत्येषु चोदय ये ददति प्रिया वसु ।
२ ३ १ २ ३ २ ३ १ २ ३ २
तव प्रणीती हर्यश्व सूरिभिर्विश्वा तरेम दुरिता ॥ २ ॥

(१०)

ऋषिः—विश्वमना वैयश्वः॥ देवता—इन्द्रः॥ छन्दः—उष्णिक्॥ स्वरः—ऋषभः॥

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २
१६८४. एदु मधोर्मदिन्तरं सिञ्चाध्वर्यो अन्धसः ।
३ २उ ३१ २र ३ १ २
एवा हि वीर स्तवते सदावृधः ॥ १ ॥
१ २ ३ १ २ ३ १ २
१६८५. इन्द्र स्थातर्हरीणां न किष्टे पूर्व्यस्तुतिम् ।
१ २ ३ १ २ ३ २ ३ १ २
उदानंश शवसा न भन्दना ॥ २ ॥
२ ३ १ २ ३ २ ३१२ ३ १ २
१६८६. तं वो वाजानां पतिमहूमहि श्रवस्यवः ।
१ २ ३१ २ ३ १ २
अप्रायुभिर्यज्ञेभिर्वावृधेन्यम् ॥ ३ ॥

(११)

ऋषिः—सोभरिः काण्वः॥ देवता—अग्निः॥ छन्दः—काकुभः प्रगाथः (१ ककुबुष्णिक्,
२ सतोबृहती)॥ स्वरः—१ ऋषभः; २ पञ्चमः॥

१ २ ३क २र ३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २
१६८७. तं गूर्धया स्वर्णरं देवासो देवमरतिं दधन्विरे। देवत्रा हव्यमूहिषे॥ १ ॥

१६८८. विभूतरातिं विप्र चित्रशोचिषमग्निमीडिष्व यन्तुरम् ।
अस्य मेधस्य सोम्यस्य सोभरे प्रेमध्वराय पूर्व्यम् ॥ २ ॥

( १२ )

ऋषिः—सप्तर्षयः ॥ देवता—पवमानः सोमः ॥ छन्दः—बार्हतः प्रगाथः ( १ बृहती, २ सतोबृहती )॥ स्वरः—१ मध्यमः; २ पञ्चमः ॥

१६८९. आ सोम स्वानो अद्रिभिस्तिरो वाराण्यव्यया ।
जनो न पुरि चम्वोर्विशद्धरिः सदो वनेषु दध्रिषे ॥ १ ॥

१६९०. स मामृजे तिरो अण्वानि मेष्यो मीढ्वान्त्सप्तिर्न वाजयुः ।
अनुमाद्यः पवमानो मनीषिभिः सोमो विप्रेभिर्ऋक्वभिः ॥ २ ॥

( १३ )

ऋषिः—कलिः प्रागाथः ॥ देवता—इन्द्रः ॥ छन्दः—बार्हतः प्रगाथः ( १ बृहती, २ सतोबृहती )॥ स्वरः—१ मध्यमः; २ पञ्चमः ॥

१६९१. वयमेनमिदा ह्योऽपीपेमेह वज्रिणम् ।
तस्मा उ अद्य सवने सुतं भरा नूनं भूषत श्रुते ॥ १ ॥

१६९२. वृकश्चिदस्य वारण उरामथिरा वयुनेषु भूषति ।
सेमं न स्तोमं जुजुषाण आ गहीन्द्र प्र चित्रया धिया ॥ २ ॥

( १४ )

ऋषिः—विश्वामित्रः ॥ देवता—इन्द्राग्नी ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१६९३. इन्द्राग्नी रोचना दिवः परि वाजेषु भूषथः । तद्वां चेति प्र वीर्यम् ॥ १ ॥

१६९४. इन्द्राग्नी अपसस्पर्युप प्र यन्ति धीतयः । ऋतस्य पथ्या३ अनु ॥ २ ॥

१६९५. इन्द्राग्नी तविषाणि वां सधस्थानि प्रयांसि च । युवोरप्तूर्यं हितम् ॥ ३ ॥

( १५ )

ऋषिः—मेधातिथिः काण्वः ॥ देवता—इन्द्रः ॥ छन्दः—बृहती ॥ स्वरः—मध्यमः ॥

१६९६. क ईं वेद सुते सचा पिबन्तं कद्वयो दधे ।
अयं यः पुरो विभिनत्त्योजसा मन्दानः शिप्र्यन्धसः ॥ १ ॥

१६९७. दाना मृगो न वारणः पुरुत्रा चरथं दधे ।
न किष्ट्वा नि यमदा सुते गमो महाँश्चरस्योजसा ॥ २ ॥

१६९८. य उग्रः सन्ननिष्टृतः स्थिरो रणाय संस्कृतः ।
यदि स्तोतुर्मघवा शृणवद्धवं नेन्द्रो योषत्या गमत् ॥ ३ ॥

( १६ )

ऋषिः—निध्रुविः काश्यपः ॥ देवता—पवमानः सोमः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१६९९. पवमाना असृक्षत सोमाः शुक्रास इन्दवः ।
अभि विश्वानि काव्या ॥ १ ॥

१७००. पवमाना दिवस्पर्यन्तरिक्षादसृक्षत ।
पृथिव्या अधि सानवि ॥ २ ॥

१७०१. पवमानास आशवः शुभ्रा असृग्रमिन्दवः ।
घ्नन्तो विश्वा अप द्विषः ॥ ३ ॥

( १७ )

ऋषिः—विश्वामित्रः ॥ देवता—इन्द्राग्नी ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१७०२. तोशा वृत्रहणा हुवे सजित्वानापराजिता । इन्द्राग्नी वाजसातमा ॥ १ ॥

१७०३. प्र वामर्चन्त्युक्थिनो नीथाविदो जरितारः । इन्द्राग्नी इष आ वृणे ॥ २ ॥

१७०४. इन्द्राग्नी नवतिं पुरो दासपत्नीरधूनुतम् । साकमकेन कर्मणा ॥ ३ ॥

( १८ )

ऋषिः—भरद्वाजो बार्हस्पत्यः ॥ देवता—अग्निः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१७०५. उप त्वा रणवसन्दृशं प्रयस्वन्तः सहस्कृत । अग्ने ससृज्महे गिरः ॥ १ ॥

१७०६. उप च्छायामिव घृणेरगन्म शर्म ते वयम् । अग्ने हिरण्यसन्दृशः ॥ २ ॥

१७०७. य उग्रइव शर्यहा तिग्मशृङ्गो न वंसगः । अग्ने पुरो रुरोजिथः ॥ ३ ॥

( १९ )

ऋषिः—भरद्वाजो बार्हस्पत्यः ॥ देवता—अग्निः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१७०८. ऋतावानं वैश्वानरमृतस्य ज्योतिषस्पतिम् । अजस्रं घर्ममीमहे ॥ १ ॥

१७०९. य इदं प्रतिपप्रथे यज्ञस्य स्वरुत्तिरन् । ऋतूनुत्सृजते वशी ॥ २ ॥

१७१०. अग्निः प्रियेषु धामसु कामो भूतस्य भव्यस्य । सम्राडेको विराजति ॥ ३ ॥

इत्यष्टादशोऽध्यायः, अष्टमप्रपाठकस्य द्वितीयोऽर्धः ॥

# अथैकोनविंशोऽध्यायः

## अष्टमप्रपाठकस्य तृतीयोऽर्धः

( १ )

ऋषिः—विरूप आङ्गिरसः ॥ देवता—अग्निः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१७११. अग्निः प्रत्नेन जन्मना शुम्भानस्तन्वां३ स्वाम्। कविर्विप्रेण वावृधे ॥ १ ॥

१७१२. ऊर्जो नपातमा हुवेऽग्निं पावकशोचिषम्। अस्मिन् यज्ञे स्वध्वरे ॥ २ ॥

१७१३. स नो मित्रमहस्त्वमग्ने शुक्रेण शोचिषा। देवैरा सत्सि बर्हिषि ॥ ३ ॥

( २ )

ऋषिः—अवत्सारः ॥ देवता—पवमानः सोमः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१७१४. उत्ते शुष्मासो अस्थू रक्षो भिन्दन्तो अद्रिवः। नुदस्व याः परिस्पृधः ॥ १ ॥

१७१५. अया निजघ्निरोजसा रथसङ्गे धने हिते। स्तवा अबिभ्युषा हृदा ॥ २ ॥

१७१६. अस्य व्रतानि नाधृषे पवमानस्य दूढ्या। रुज यस्त्वा पृतन्यति ॥ ३ ॥

१७१७. तं हिन्वन्ति मदच्युतं हरिं नदीषु वाजिनम्। इन्दुमिन्द्राय मत्सरम् ॥ ४ ॥

( ३ )

ऋषिः—विश्वामित्रः ॥ देवता—इन्द्रः ॥ छन्दः—बृहती ॥ स्वरः—मध्यमः ॥

१७१८. आ मन्द्रैरिन्द्र हरिभिर्याहि मयूररोमभिः ।
मा त्वा के चिन्नि येमुरिन्न पाशिनोऽति धन्वेव ताँ इहि ॥ १ ॥

१७१९. वृत्रखादो वलं रुजः पुरां दर्मो अपामजः ।
स्थाता रथस्य हर्योरभिस्वर इन्द्रो दृढा चिदारुजः ॥ २ ॥

१७२०. गम्भीराँ उदधीँरिव क्रतुं पुष्यसि गाइव ।
प्र सुगोपा यवसं धेनवो यथा हृदं कुल्याइवाशत ॥ ३ ॥

( ४ )

ऋषिः—देवातिथिः काण्वः ॥ देवता—इन्द्रः ॥ छन्दः—बार्हतः प्रगाथः
( १ बृहती, २ सतोबृहती ) ॥ स्वरः—१ मध्यमः; २ पञ्चमः ॥

१७२१. यथा गौरो अपा कृतं तृष्यन्नेत्यवेरिणम् ।
आपित्वे नः प्रपित्वे तूयमा गहि कण्वेषु सु सचा पिब ॥ १ ॥

१७२२. मन्दन्तु त्वा मघवन्निन्द्रेन्दवो राधोदेयाय सुन्वते ।
आमुष्या सोममपिबश्चमू सुतं ज्येष्ठं तद्दधिषे सहः ॥ २ ॥

( ५ )

ऋषिः—गोतमो राहूगणः ॥ देवता—इन्द्रः ॥ छन्दः—बार्हतः प्रगाथः ( १ बृहती, २ सतोबृहती )॥ स्वरः—१ मध्यमः; २ पञ्चमः ॥

१७२३. त्वमङ्ग प्र शंसिषो देवः शविष्ठ मर्त्यम् ।
न त्वदन्यो मघवन्नस्ति मर्डितेन्द्र ब्रवीमि ते वचः ॥ १ ॥

१७२४. मा ते राधांसि मा त ऊतयो वसोऽस्मान् कदा चना दभन्।
विश्वा च न उपमिमीहि मानुष वसूनि चर्षणिभ्य आ ॥ २ ॥

( ६ )

ऋषिः—वामदेवः ॥ देवता—उषाः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१७२५. प्रति ष्या सूनरी जनी व्युच्छन्ती परि स्वसुः। दिवो अदर्शि दुहिता ॥ १ ॥

१७२६. अश्वेव चित्रारुषी माता गवामृतावरी। सखा भूदश्विनोरुषाः ॥ २ ॥

१७२७. उत सखास्यश्विनोरुत माता गवामसि। उतोषो वस्व ईशिषे ॥ ३ ॥

( ७ )

ऋषिः—प्रस्कण्वः काण्वः ॥ देवता—अश्विनौ ॥ छन्दः—गायत्री ॥
स्वरः—षड्जः ॥

१७२८. एषो उषा अपूर्व्या व्युच्छति प्रिया दिवः। स्तुषे वामश्विना बृहत् ॥ १ ॥

१७२९. या दस्रा सिन्धुमातरा मनोतरा रयीणाम्। धिया देवा वसुविदा ॥ २ ॥

१७३०. वच्यन्ते वां ककुहासो जूर्णायामधि विष्टपि। यद्वां रथो विभिष्पतात् ॥ ३ ॥

( ८ )

ऋषिः—गोतमो राहूगणः ॥ देवता—उषाः ॥ छन्दः—उष्णिक् ॥
स्वरः—ऋषभः ॥

१७३१. उषस्तच्चित्रमा भरास्मभ्यं वाजिनीवति ।
येन तोकं च तनयं च धामहे ॥ १ ॥

१७३२. उषो अद्येह गोमत्यश्वावति विभावरि ।
रेवदस्मे व्युच्छ सूनृतावति ॥ २ ॥

१७३३. युङ्क्ष्वा हि वाजिनीवत्यश्वाँ अद्यारुणाँ उषः ।
अथा नो विश्वा सौभगान्या वह ॥ ३ ॥

( ९ )

ऋषिः—गोतमो राहूगणः ॥ देवता—अश्विनौ ॥ छन्दः—उष्णिक् ॥ स्वरः—ऋषभः ॥

१७३४. अश्विना वर्तिरस्मदा गोमद् दस्रा हिरण्यवत् ।
अर्वाग्रथं समनसा नि यच्छतम् ॥ १ ॥

१७३५. एह देवा मयोभुवा दस्रा हिरण्यवर्त्तनी ।
उषर्बुधो वहन्तु सोमपीतये ॥ २ ॥

१७३६. यावित्था श्लोकमा दिवो ज्योतिर्जनाय चक्रथुः ।
आ न ऊर्जं वहतमश्विना युवम् ॥ ३ ॥

( १० )

ऋषिः—वसुश्रुत आत्रेयः ॥ देवता—अग्निः ॥ छन्दः—पङ्क्तिः ॥ स्वरः—पञ्चमः ॥

१७३७. अग्निं तं मन्ये यो वसुरस्तं यं यन्ति धेनवः ।
अस्तमर्वन्त आशवोऽस्तं नित्यासो वाजिन इषं स्तोतृभ्य आ भर ॥ १ ॥

१७३८. अग्निर्हि वाजिनं विशे ददाति विश्वचर्षणिः ।
अग्नी राये स्वाभुवं स प्रीतो याति वार्यमिषं स्तोतृभ्य आ भर ॥ २ ॥

१७३९. सो अग्निर्यो वसुर्गृणे सं यमायन्ति धेनवः ।
समर्वन्तो रघुद्रुवः सं सुजातासः सूरय इषं स्तोतृभ्य आ भर ॥ ३ ॥

( ११ )

ऋषिः—सत्यश्रवा आत्रेयः ॥ देवता—उषाः ॥ छन्दः—पङ्क्तिः ॥ स्वरः—पञ्चमः ॥

१७४०. महे नो अद्य बोधयोषो राये दिवित्मती ।
यथा चिन्नो अबोधयः सत्यश्रवसि वाय्ये सुजाते अश्वसूनृते ॥ १ ॥

१७४१. या सुनीथे शौचद्रथे व्यौच्छो दुहितर्दिवः ।
सा व्युच्छ सहीयसि सत्यश्रवसि वाय्ये सुजाते अश्वसूनृते ॥ २ ॥

१७४२. सा नो अद्याभरद्व सुर्व्युच्छा दुहितर्दिवः ।
यो व्यौच्छः सहीयसि सत्यश्रवसि वाय्ये सुजाते अश्वसूनृते॥ ३ ॥

(१२)

ऋषिः—अवस्युरात्रेयः॥ देवता—अश्विनौ॥ छन्दः—पङ्क्तिः॥ स्वरः—पञ्चमः॥

१७४३. प्रति प्रियतमं रथं वृषणं वसुवाहनम् ।
स्तोता वामश्विनावृषि स्तोमेभिर्भूषति प्रति माध्वी मम श्रुतं हवम्॥ १ ॥

१७४४. अत्यायातमश्विना तिरो विश्वा अहं सना ।
दस्रा हिरण्यवर्त्तनी सुषुम्णा सिन्धुवाहसा माध्वी मम श्रुतं हवम्॥ २ ॥

१७४५. आ नो रत्नानि बिभ्रतावश्विना गच्छतं युवम् ।
रुद्रा हिरण्यवर्तनी जुषाणा वाजिनीवसू माध्वी मम श्रुतं हवम्॥ ३ ॥

(१३)

ऋषिः—बुधगविष्ठिरावात्रेयौ॥ देवता—अग्निः॥ छन्दः—त्रिष्टुप्॥ स्वरः—धैवतः॥

१७४६. अबोध्यग्निः समिधा जनानां प्रति धेनुमिवायतीमुषासम् ।
यह्वाइव प्र वयामुज्जिहानाः प्र भानवः सस्त्रते नाकमच्छ ॥ १ ॥

१७४७. अबोधि होता यजथाय देवानूर्ध्वो अग्निः सुमनाः प्रातरस्थात्।
समिद्धस्य रुशददर्शि पाजो महान् देवस्तमसो निरमोचि ॥ २ ॥

१७४८. यदीं गणस्य रशनामजीगः शुचिरङ्क्ते शुचिभिर्गोभिरग्निः ।
आद्दक्षिणा युज्यते वाजयन्त्युत्तानामूर्ध्वो अधयज्जुहूभिः ॥ ३ ॥

(१४)

ऋषिः—कुत्स आङ्गिरसः॥ देवता—उषाः॥ छन्दः—त्रिष्टुप्॥ स्वरः—धैवतः॥

१७४९. इदं श्रेष्ठं ज्योतिषां ज्योतिरागाच्चित्रः प्रकेतो अजनिष्ट विभ्वा।
यथा प्रसूता सवितुः सवायैवा रात्र्युषसे योनिमारैक् ॥ १ ॥

१७५०. रुशद्वत्सा रुशती श्वेत्यागादारैगु कृष्णा सदनान्यस्याः ।
समानबन्धू अमृते अनूची द्यावा वर्णं चरत आमिनाने ॥ २ ॥

१७५१. समानो अध्वा स्वस्रोरनन्तस्तमन्यान्या चरतो देवशिष्टे ।
न मेथेते न तस्थतुः सुमेके नक्तोषासा समनसा विरूपे ॥ ३ ॥

( १५ )

ऋषिः—अत्रिः ॥ देवता—अश्विनौ ॥ छन्दः—त्रिष्टुप् ॥ स्वरः—धैवतः ॥

१७५२. आ भात्यग्निरुषसामनीकमुद्विप्राणां देवया वाचो अस्थुः ।
अर्वाञ्चा नूनं रथ्येह यातं पीपिवांसमश्विना घर्ममच्छ ॥ १ ॥

१७५३. न संस्कृतं प्र मिमीतो गमिष्ठान्ति नूनमश्विनोपस्तुतेह ।
दिवाभिपित्वेऽवसागमिष्ठा प्रत्यवर्त्तिं दाशुषे शम्भविष्ठा ॥ २ ॥

१७५४. उता यातं संगवे प्रातरह्नो मध्यन्दिन उदिता सूर्यस्य ।
दिवा नक्तमवसा शन्तमेन नेदानीं पीतिरश्विना ततान ॥ ३ ॥

( १६ )

ऋषिः—गोतमो राहूगणः ॥ देवता—उषाः ॥ छन्दः—जगती ॥ स्वरः—निषादः ॥

१७५५. एता उ त्या उषसः केतुमक्रत पूर्वे अर्धे रजसो भानुमञ्जते।
निष्कृण्वाना आयुधानीव धृष्णवः प्रति गावोऽरुषीर्यन्ति मातरः ॥ १ ॥

१७५६. उदपप्तन्नरुणा भानवो वृथा स्वायुजो अरुषीर्गा अयुक्षत।
अक्रन्नुषासो वयुनानि पूर्वथा रुशन्तं भानुमरुषीरशिश्रयुः ॥ २ ॥

१७५७. अर्चन्ति नारीरपसो न विष्टिभिः समानेन योजनेना परावतः।
इषं वहन्तीः सुकृते सुदानवे विश्वेदह यजमानाय सुन्वते ॥ ३ ॥

( १७ )

ऋषिः—दीर्घतमा औचथ्यः ॥ देवता—अश्विनौ ॥ छन्दः—जगती ॥ स्वरः—निषादः ॥

१७५८. अबोध्यग्निर्ज्म उदेति सूर्यो व्यू३षाश्चन्द्रा मह्यावो अर्चिषा।
आयुक्षातामश्विना यातवे रथं प्रासावीद्देवः सविता जगत् पृथक् ॥ १ ॥

१७५९. यद्युञ्जाथे वृषणमश्विना रथं घृतेन नो मधुना क्षत्रमुक्षतम्।
अस्माकं ब्रह्म पृतनासु जिन्वतं वयं धना शूरसाता भजेमहि ॥ २ ॥

१७६०. अर्वाङ् त्रिचक्रो मधुवाहनो रथो जीराश्वो अश्विनोर्यातु सुष्टुतः।
त्रिबन्धुरो मघवा विश्वसौभगः शं न आ वक्षद् द्विपदे चतुष्पदे ॥ ३ ॥

(१८)

ऋषिः—अवत्सारः ॥ देवता—पवमानः सोमः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१७६१. प्र ते धारा असश्चतो दिवो न यन्ति वृष्टयः।
अच्छा वाजं सहस्त्रिणम् ॥ १ ॥

१७६२. अभि प्रियाणि काव्या विश्वा चक्षाणो अर्षति।
हरिस्तुञ्जान आयुधा ॥ २ ॥

१७६३. स मर्मृजान आयुभिरिभो राजेव सुव्रतः ।
श्येनो न वंसु षीदति ॥ ३ ॥

१७६४. स नो विश्वा दिवो वसूतो पृथिव्या अधि ।
पुनान इन्दवा भर ॥ ४ ॥

इत्येकोनविंशोऽध्यायः, अष्टमप्रपाठकश्च समाप्तः ॥

# अथ विंशोऽध्यायः

## नवमप्रपाठकस्य प्रथमोऽर्धः

( १ )

ऋषिः—नृमेधः ॥ देवता—पवमानः सोमः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१७६५. प्रास्य धारा अक्षरन् वृष्णः सुतस्यौजसः। देवाँ अनु प्रभूषतः ॥ १ ॥

१७६६. सप्तिं मृजन्ति वेधसो गृणन्तः कारवो गिरा। ज्योतिर्जज्ञानमुक्थ्यम् ॥ २ ॥

१७६७. सुषहा सोम तानि ते पुनानाय प्रभूवसो। वर्धा समुद्रमुक्थ्य ॥ ३ ॥

( २ )

ऋषिः—वामदेवः ॥ देवता—इन्द्रः ॥ छन्दः—द्विपदा गायत्री ॥ स्वरः—षड्जः ॥

१७६८. एष ब्रह्मा य ऋत्विय इन्द्रो नाम श्रुतो गृणे ॥ १ ॥

१७६९. त्वामिच्छवसस्पते यन्ति गिरो न संयतः ॥ २ ॥

१७७०. वि स्त्रुतयो यथा पथ इन्द्र त्वद् यन्तु रातयः ॥ ३ ॥

( ३ )

ऋषिः—प्रियमेधः ॥ देवता—इन्द्रः ॥ छन्दः—आनुष्टुभः प्रगाथः ( १ अनुष्टुप्, २-३ गायत्री ) ॥ स्वरः—१ गान्धारः; २-३ षड्जः ॥

१७७१. आ त्वा रथं यथोतये सुम्नाय वर्तयामसि ।
तुविकूर्मिमृतीषहमिन्द्रं शविष्ठ सत्पतिम् ॥ १ ॥

१७७२. तुविशुष्म तुविक्रतो शचीवो विश्वया मते। आ पप्राथ महित्वना ॥ २ ॥

१७७३. यस्य ते महिना महः परि ज्मायन्तमीयतुः। हस्ता वज्रं हिरण्ययम् ॥ ३ ॥

( ४ )

ऋषिः—दीर्घतमा औचथ्यः ॥ देवता—अग्निः ॥ छन्दः—उष्णिक् ( १ विराट्, २ भुरिक्, ३ निचृत् ) ॥ स्वरः—पञ्चमः ॥

१७७४. आ यः पुरं नार्मिणीमदीदेदत्यः कविर्नभन्यो३ नार्वा ।
सूरो न रुरुक्वाञ्छतात्मा ॥ १ ॥

१७७५. अभि द्विजन्मा त्री रोचनानि विश्वा रजांसि शुशुचानो अस्थात्।
होता यजिष्ठो अपां सधस्थे ॥ २ ॥

१७७६. अयं स होता यो द्विजन्मा विश्वा दधे वार्याणि श्रवस्या ।
मर्तो यो अस्मै सुतुको ददाश ॥ ३ ॥

( ५ )

ऋषिः—वामदेवः ॥ देवता—अग्निः ॥ छन्दः—पदपङ्क्तिः ॥ स्वरः—पञ्चमः ॥

१७७७. अग्ने तमद्याश्वं न स्तोमैः क्रतुं न भद्रं हृदिस्पृशम्।
ऋध्यामा त ओहैः ॥ १ ॥

१७७८. अधा ह्यग्ने क्रतोर्भद्रस्य दक्षस्य साधोः ।
रथीर्ऋतस्य बृहतो बभूथ ॥ २ ॥

१७७९. एभिर्नो अर्कैर्भवा नो अर्वाङ् स्वा३र्ण ज्योतिः।
अग्ने विश्वेभिः सुमना अनीकैः ॥ ३ ॥

( ६ )

ऋषिः—प्रस्कण्वः काण्वः ॥ देवता—अग्निरश्विनावुषाश्च ॥ छन्दः—बार्हतः प्रगाथः ( १ बृहती, २ सतोबृहती ) ॥ स्वरः—१ मध्यमः; २ पञ्चमः ॥

१७८०. अग्ने विवस्वदुषसश्चित्रं राधो अमर्त्य ।
आ दाशुषे जातवेदो वहा त्वमद्या देवाँ उषर्बुधः ॥ १ ॥

१७८१. जुष्टो हि दूतो असि हव्यवाहनोऽग्ने रथीरध्वराणाम्।
सजूरश्विभ्यामुषसा सुवीर्यमस्मे धेहि श्रवो बृहत् ॥ २ ॥

( ७ )

ऋषिः—बृहदुक्थो वामदेव्यः ॥ देवता—इन्द्रः ॥ छन्दः—त्रिष्टुप् ॥ स्वरः—धैवतः ॥

१७८२. विधुं दद्राणं समने बहूनां युवानं सन्तं पलितो जगार ।
देवस्य पश्य काव्यं महित्वाद्या ममार स ह्यः समान ॥ १ ॥

१७८३. शाक्मना शाको अरुणः सुपर्ण आ यो महः शूरः सनादनीडः।
यच्चिकेत सत्यमित्तन्न मोघं वसु स्पार्हमुत जेतोत दाता ॥ २ ॥

१७८४. ऐभिर्ददे वृष्ण्या पौंस्यानि येभिरौक्षद् वृत्रहत्याय वज्री ।
ये कर्मणः क्रियमाणस्य मह्न ऋतेकर्ममुदजायन्त देवाः ॥ ३ ॥

( ८ )

ऋषिः—बिन्दुः पूतदक्षो वा ॥ देवता—मरुतः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१७८५. अस्ति सोमो अयं सुतः पिबन्त्यस्य मरुतः।उत स्वराजो अश्विना ॥ १ ॥

१७८६. पिबन्ति मित्रो अर्यमा तना पूतस्य वरुणः । त्रिषधस्थस्य जावतः ॥ २ ॥

१७८७. उतो न्वस्य जोषमा इन्द्रः सुतस्य गोमतः । प्रातर्होतेव मत्सति ॥ ३ ॥

( ९ )

ऋषिः—जमदग्निर्भार्गवः ॥ देवता—सूर्यः ॥ छन्दः—बार्हतः प्रगाथः ( १ बृहती, २ सतोबृहती )॥ स्वरः—१ मध्यमः; २ पञ्चमः ॥

१७८८. बण्महाँ असि सूर्य बडादित्य महाँ असि ।
महस्ते सतो महिमा पनिष्टम मह्ना देव महाँ असि ॥ १ ॥

१७८९. बट् सूर्य श्रवसा महाँ असि सत्रा देव महाँ असि ।
मह्ना देवानामसुर्यः पुरोहितो विभु ज्योतिरदाभ्यम् ॥ २ ॥

( १० )

ऋषिः—सुकक्षः ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१७९०. उप नो हरिभिः सुतं याहि मदानां पते । उप नो हरिभिः सुतम् ॥ १ ॥

१७९१. द्विता यो वृत्रहन्तमो विद इन्द्रः शतक्रतुः । उप नो हरिभिः सुतम् ॥ २ ॥

१७९२. त्वं हि वृत्रहन्नेषां पाता सोमानामसि । उप नो हरिभिः सुतम् ॥ ३ ॥

( ११ )

ऋषिः—वसिष्ठः ॥ देवता—इन्द्रः ॥ छन्दः—भुरिगनुष्टुप् ॥ स्वरः—गान्धारः ॥

१७९३. प्र वो महे महेवृधे भरध्वं प्रचेतसे प्र सुमतिं कृणुध्वम् ।
विशः पूर्वीः प्र चर चर्षणिप्राः ॥ १ ॥

१७९४. उरुव्यचसे महिने सुवृक्तिमिन्द्राय ब्रह्म जनयन्त विप्राः ।
तस्य व्रतानि न मिनन्ति धीराः ॥ २ ॥

१७९५. इन्द्रं वाणीरनुत्तमन्युमेव सत्रा राजानं दधिरे सहध्यै ।
हर्यश्वाय बर्हया समापीन् ॥ ३ ॥

( १२ )

ऋषिः—वसिष्ठः ॥ देवता—इन्द्रः ॥ छन्दः—बार्हतः प्रगाथः ( १ बृहती, २ सतोबृहती )॥ स्वरः—१ मध्यमः; २ पञ्चमः ॥

१७९६. यदिन्द्र यावतस्त्वमेतावदहमीशीय ।
स्तोतारमिद्दधिषे रदावसो न पापत्वाय रंसिषम् ॥ १ ॥

१७९७. शिक्षेयमिन्महयते दिवेदिवे राय आ कुहचिद् विदे।
न हि त्वदन्यन्मघवन्न आप्यं वस्यो अस्ति पिता च न॥ २॥

( १३ )

ऋषिः—वसिष्ठः॥ देवता—इन्द्रः॥ छन्दः—विराडनुष्टुप्॥ स्वरः—गान्धारः॥

१७९८. श्रुधी हवं विपिपानस्याद्रेर्बोधा विप्रस्यार्चतो मनीषाम् ।
कृष्वा दुवांस्यन्तमा सचेमा ॥ १॥

१७९९. न ते गिरो अपि मृष्ये तुरस्य न सुष्टुतिमसुर्यस्य विद्वान्।
सदा ते नाम स्वयशो विवक्मि ॥ २॥

१८००. भूरि हि ते सवना मानुषेषु भूरि मनीषी हवते त्वामित्।
मारे अस्मन्मघवं ज्योक्कः ॥ ३॥

( १४ )

ऋषिः—सुदाः पैजवनः॥ देवता—इन्द्रः॥ छन्दः—शक्वरी॥ स्वरः—धैवतः॥

१८०१. प्रो ष्वस्मै पुरोरथमिन्द्राय शूषमर्चत ।
अभीके चिदु लोककृत् सङ्गे समत्सु वृत्रहा ।
अस्माकं बोधि चोदिता नभन्तामन्यकेषां ज्याका अधि धन्वसु॥ १॥

१८०२. त्वं सिन्धूँरवासृजोऽधराचो अहन्नहिम् ।
अशत्रुरिन्द्र जज्ञिषे विश्वं पुष्यसि वार्यम् ।
तं त्वा परि ष्वजामहे नभन्तामन्यकेषां ज्याका अधि धन्वसु॥ २॥

१८०३. वि षु विश्वा अरातयोऽर्यो नशन्त नो धियः ।
अस्तासि शत्रवे वधं यो न इन्द्र जिघांसति ।
या ते रातिर्ददिर्वसु नभन्तामन्यकेषां ज्याका अधि धन्वसु॥ ३॥

( १५ )

ऋषिः—मेधातिथिः काण्वः, प्रियमेधश्चाङ्गिरसः॥ देवता—इन्द्रः॥
छन्दः—गायत्री॥ स्वरः—षड्जः॥

१८०४. रेवाँ इद्रेवत स्तोता स्यात्त्वावतो मघोनः ।
प्रेदु हरिवः सुतस्य ॥ १॥

१८०५. उक्थं च न शस्यमानं नागो रयिरा चिकेत ।
न गायत्रं गीयमानम् ॥ २ ॥

१८०६. मा न इन्द्र पीयत्नवे मा शर्धते परा दाः ।
शिक्षा शचीवः शचीभिः ॥ ३ ॥

( १६ )

ऋषिः—नीपातिथिः काण्वः ॥ देवता—इन्द्रः ॥ छन्दः—अनुष्टुप् ॥ स्वरः—गान्धारः ॥

१८०७. एन्द्र याहि हरिभिरुप कण्वस्य सुष्टुतिम् ।
दिवो अमुष्य शासतो दिवं यय दिवावसो ॥ १ ॥

१८०८. अत्रा वि नेमिरेषामुरां न धूनुते वृकः ।
दिवो अमुष्य शासतो दिवं यय दिवावसो ॥ २ ॥

१८०९. आ त्वा ग्रावा वदन्निह सोमी घोषेण वक्षतु ।
दिवो अमुष्य शासतो दिवं यय दिवावसो ॥ ३ ॥

( १७ )

ऋषिः—जमदग्निर्भार्गवः ॥ देवता—पवमानः सोमः ॥ छन्दः—द्विपदागायत्री ॥ स्वरः—षड्जः ॥

१८१०. पवस्व सोम मन्दयन्निन्द्राय मधुमत्तमः ॥ १ ॥

१८११. ते सुतासो विपश्चितः शुक्रा वायुमसृक्षत ॥ २ ॥

१८१२. असृग्रं देववीतये वाजयन्तो रथाइव ॥ ३ ॥

( १८ )

ऋषिः—परुच्छेपो दैवोदासिः ॥ देवता—अग्निः ॥ छन्दः—अत्यष्टिः ॥ स्वरः—गान्धारः ॥

१८१३. अग्निं होतारं मन्ये दास्वन्तं वसोः
सूनुं सहसो जातवेदसं विप्रं न जातवेदसम् ।
य ऊर्ध्वया स्वध्वरो देवो देवाच्या कृपा
घृतस्य विभ्राष्टिमनु शुक्रशोचिष आजुह्वानस्य सर्पिषः ॥ १ ॥

१८१४. यजिष्ठं त्वा यजमाना हुवेम ज्येष्ठमङ्गिरसां
विप्र मन्मभिर्विप्रेभिः शुक्र मन्मभिः ।

परिज्मानमिव द्यां होतारं चर्षणीनाम् ।
शोचिष्केशं वृषणं यमिमा विशः प्रावन्तु जूतये विशः ॥ २ ॥

१८१५. स हि पुरू चिदोजसा विरुक्मता
दीद्यानो भवति द्रुहन्तरः परशुर्न द्रुहन्तरः ।
वीडु चिद्यस्य समृतौ श्रुवद्वनेव यत्स्थिरम् ।
निष्षहमाणो यमते नायते धन्वासहा नायते ॥ ३ ॥

इति नवमप्रपाठकस्य प्रथमोऽर्धः ॥

## नवमप्रपाठकस्य द्वितीयोऽर्धः

( १ )

ऋषिः—अग्निः पावकः ॥ देवता—अग्निः ॥ छन्दः—१-२ विष्टारपङ्क्तिः; ३-५ सतोबृहती; ६ उपरिष्टाज्ज्योतिस्त्रिष्टुप् ॥ स्वरः—१-५ पञ्चमः; ६ धैवतः ॥

१८१६. अग्ने तव श्रवो वयो महि भ्राजन्ते अर्चयो विभावसो ।
बृहद्भानो शवसा वाजमुक्थ्यां३ दधासि दाशुषे कवे ॥ १ ॥

१८१७. पावकवर्चाः शुक्रवर्चा अनूनवर्चा उदियर्षि भानुना ।
पुत्रो मातरा विचरन्नुपावसि पृणक्षि रोदसी उभे ॥ २ ॥

१८१८. ऊर्जो नपाज्जातवेदः सुशस्तिभिर्मन्दस्व धीतिभिर्हितः ।
त्वे इषः सं दधुर्भूरिवर्पसश्चित्रोतयो वामजाताः ॥ ३ ॥

१८१९. इरज्यन्नग्ने प्रथयस्व जन्तुभिरस्मे रायो अमर्त्य ।
स दर्शतस्य वपुषो वि राजसि पृणक्षि दर्शतं क्रतुम् ॥ ४ ॥

१८२०. इष्कर्तारमध्वरस्य प्रचेतसं क्षयन्तं राधसो महः ।
रातिं वामस्य सुभगां महीमिषं दधासि सानसिं रयिम् ॥ ५ ॥

१८२१. ऋतावानं महिषं विश्वदर्शतमग्निं सुम्नाय दधिरे पुरो जनाः ।
श्रुत्कर्णं सप्रथस्तमं त्वा गिरा दैव्यं मानुषा युगा ॥ ६ ॥

( २ )

ऋषिः—सोभरिः काण्वः ॥ देवता—अग्निः ॥ छन्दः—काकुभः प्रगाथः ( १ ककुबुष्णिक्, २ सतोबृहती )॥ स्वरः—१ ऋषभः; २ पञ्चमः ॥

१८२२. प्र सो अग्ने तवोतिभिः सुवीराभिस्तरति वाजकर्मभिः ।
यस्य त्वं सख्यमाविथ ॥ १ ॥

१८२३. तव द्रप्सो नीलवान् वाश ऋत्विय इन्धानः सिष्णवा ददे ।
त्वं महीनामुषसामसि प्रियः क्षपो वस्तुषु राजसि ॥ २ ॥

( ३ )

ऋषिः—अरुणो वैतहव्यः ॥ देवता—अग्निः ॥ छन्दः—जगती ॥ स्वरः—निषादः ॥

१८२४. तमोषधीर्दधिरे गर्भमृत्वियं तमापो अग्निं जनयन्त मातरः ।
तमित्समानं वनिनश्च वीरुधोऽन्तर्वतीश्च सुवते च विश्वहा ॥ १ ॥

( ४ )

ऋषिः—अग्निश्चाक्षुषः प्रजापतिर्वा ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१८२५. अग्निरिन्द्राय पवते दिवि शुक्रो वि राजति ।
महिषीव वि जायते ॥ १ ॥

( ५ )

ऋषिः—अवत्सारः काश्यपः ॥ देवता—अग्निः ॥ छन्दः—त्रिष्टुप् ॥ स्वरः—धैवतः ॥

१८२६. यो जागार तमृचः कामयन्ते यो जागार तमु सामानि यन्ति ।
यो जागार तमयं सोम आह तवाहमस्मि सख्ये न्योकाः ॥ १ ॥

( ६ )

ऋषिः—अवत्सारः काश्यपः ॥ देवता—अग्निः ॥ छन्दः—त्रिष्टुप् ॥ स्वरः—धैवतः ॥

१८२७. अग्निर्जागार तमृचः कामयन्तेऽग्निर्जागार तमु सामानि यन्ति ।
अग्निर्जागार तमयं सोम आह तवाहमस्मि सख्ये न्योकाः ॥ १ ॥

( ७ )

ऋषिः—मृगः ॥ देवता—अग्निः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१८२८. नमः सखिभ्यः पूर्वसद्भ्यो नमः साकंनिषेभ्यः ।
युञ्जे वाचं शतपदीम् ॥ १ ॥

३ १ २र ३ १ २ ३ १ २ ३ १ २
१८२९. युञ्जे वाचं शतपदीं गाये सहस्रवर्तनि ।
३ १ २र ३ १ २
गायत्रं त्रैष्टुभं जगत् ॥ २ ॥

३ १ २र ३ २ ३ १ २ ३ २ ३ १ २
१८३०. गायत्रं त्रैष्टुभं जगद् विश्वा रूपाणि सम्भृता ।
३ १ २र ३ २
देवा ओकांसि चक्रिरे ॥ ३ ॥

( ८ )

ऋषिः—अवत्सारो वत्सप्रीर्वा ॥ देवता—अग्निः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

३ २उ ३ १ २३ २उ ३ २ ३ २ ३ १ २
१८३१. अग्निर्ज्योतिर्ज्योतिरग्निरिन्द्रो ज्योतिर्ज्योतिरिन्द्रः ।
२ ३ २ ३ २ ३ १ २
सूर्यो ज्योतिर्ज्योतिः सूर्यः ॥ १ ॥

१ २ ३ १ २र ३ १ २ ३ १ २
१८३२. पुनरूर्जा नि वर्तस्व पुनरग्न इषायुषा ।
१ २ ३ १ २
पुनर्नः पाह्यंहसः ॥ २ ॥

३ २ ३ १ २र ३ २ ३ १ २ ३ १ २
१८३३. सह रय्या नि वर्तस्वाग्ने पिन्वस्व धारया ।
३ १ २ ३ २ ३ १ २
विश्वप्स्न्या विश्वतस्परि ॥ ३ ॥

( ९ )

ऋषिः—गोषूक्त्यश्वसूक्तिनौ काण्वायनौ ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१ २ ३ २उ ३ १ २र ३ २ ३ २ ३ २
१८३४. यदिन्द्राहं यथा त्वमीशीय वस्व एक इत् ।
३ २ ३ १ २
स्तोता मे गोसखा स्यात् ॥ १ ॥

१ २ ३ १ २ ३ १ २ ३ १ २
१८३५. शिक्षेयमस्मै दित्सेयं शचीपते मनीषिणे ।
२ ३ १ २र ३ २
यदहं गोपतिः स्याम् ॥ २ ॥

३ १ २ ३ २ ३ १ २ ३ २
१८३६. धेनुष्ट इन्द्र सूनृता यजमानाय सुन्वते ।
१ २र ३ १ २
गामश्वं पिप्युषी दुहे ॥ ३ ॥

( १० )

ऋषिः—त्रिशिरास्त्वाष्ट्रः सिन्धुद्वीपो वाम्बरीषः ॥ देवता—आपः ॥
छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

२ ३ १ २र ३ २ ३ १ २ ३ १ २
१८३७. आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन ।
३ १ २र ३ १ २
महे रणाय चक्षसे ॥ १ ॥

१८३८. यो वः शिवतमो रसस्तस्य भाजयतेह नः ।
उशतीरिव मातरः ॥ २ ॥

१८३९. तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ ।
आपो जनयथा च नः ॥ ३ ॥

( ११ )

ऋषिः—उलो वातायनः ॥ देवता—वायुः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१८४०. वात आ वातु भेषजं शम्भु मयोभु नो हृदे ।
प्र न आयूँषि तारिषत् ॥ १ ॥

१८४१. उत वात पितासि न उत भ्रातोत नः सखा ।
स नो जीवातवे कृधि ॥ २ ॥

१८४२. यददो वात ते गृहे३मृतं निहितं गुहा ।
तस्य नो धेहि जीवसे ॥ ३ ॥

( १२ )

ऋषिः—सुपर्णः ॥ देवता—सूर्यः ॥ छन्दः—त्रिष्टुप् ॥ स्वरः—धैवतः ॥

१८४३. अभि वाजी विश्वरूपो जनित्रं हिरण्ययं बिभ्रदत्कं सुपर्णः ।
सूर्यस्य भानुमृतुथा वसानः परि स्वयं मेधमृज्रो जजान ॥ १ ॥

१८४४. अप्सु रेतः शिश्रिये विश्वरूपं तेजः पृथिव्यामधि यत् सम्बभूव ।
अन्तरिक्षे स्वं महिमानं मिमानः कनिक्रन्ति वृष्णो अश्वस्य रेतः ॥ २ ॥

१८४५. अयं सहस्रा परि युक्ता वसानः सूर्यस्य भानुं यज्ञो दाधार ।
सहस्रदाः शतदा भूरिदावा धर्ता दिवो भुवनस्य विश्पतिः ॥ ३ ॥

( १३ )

ऋषिः—वेनः ॥ देवता—इन्द्रः ॥ छन्दः—त्रिष्टुप् ॥ स्वरः—धैवतः ॥

१८४६. नाके सुपर्णमुप यत्पतन्तं हृदा वेनन्तो अभ्यचक्षत त्वा ।
हिरण्यपक्षं वरुणस्य दूतं यमस्य योनौ शकुनं भुरण्युम् ॥ १ ॥

१८४७. ऊर्ध्वो गन्धर्वो अधि नाके अस्थात् प्रत्यङ् चित्रा बिभ्रदस्यायुधानि ।
वसानो अत्कं सुरभिं दृशे कं स्वा३र्ण नाम जनत प्रियाणि ॥ २ ॥

१८४८. द्रप्सः समुद्रमभि यज्जिगाति पश्यन् गृध्रस्य चक्षसा विधर्मन् ।
भानुः शुक्रेण शोचिषा चकानस्तृतीये चक्रे रजसि प्रियाणि ॥ ३ ॥

इति विंशोऽध्यायः, नवमप्रपाठकस्य द्वितीयोऽर्धः ॥

# अथैकविंशोऽध्यायः

## नवमप्रपाठकस्य तृतीयोऽर्धः

( १ )

ऋषिः—अप्रतिरथ ऐन्द्रः ॥ देवता—इन्द्रः ॥ छन्दः—त्रिष्टुप् ॥ स्वरः—धैवतः ॥

१८४९. आशुः शिशानो वृषभो न भीमो घनाघनः क्षोभणश्चर्षणीनाम् ।
सङ्क्रन्दनोऽनिमिष एकवीरः शतं सेना अजयत् साकमिन्द्रः ॥ १ ॥

१८५०. सङ्क्रन्दनेनानिमिषेण जिष्णुना युत्कारेण दुश्च्यवनेन धृष्णुना ।
तदिन्द्रेण जयत तत्सहध्वं युधो नर इषुहस्तेन वृष्णा ॥ २ ॥

१८५१. स इषुहस्तैः स निषङ्गिभिर्वशी संसृष्टा स युध इन्द्रो गणेन ।
संसृष्टजित् सोमपा बाहुशर्ध्यू३ग्रधन्वा प्रतिहिताभिरस्ता ॥ ३ ॥

( २ )

ऋषिः—अप्रतिरथ ऐन्द्रः ॥ देवता—१ बृहस्पतिः; २-३ इन्द्रः ॥
छन्दः—त्रिष्टुप् ॥ स्वरः—धैवतः ॥

१८५२. बृहस्पते परि दीया रथेन रक्षोहामित्राँ अपबाधमानः ।
प्रभञ्जन्त्सेनाः प्रमृणो युधा जयन्नस्माकमेध्यविता रथानाम् ॥ १ ॥

१८५३. बलविज्ञायः स्थविरः प्रवीरः सहस्वान् वाजी सहमान उग्रः ।
अभिवीरो अभिसत्वा सहोजा जैत्रमिन्द्र रथमा तिष्ठ गोवित् ॥ २ ॥

१८५४. गोत्रभिदं गोविदं वज्रबाहुं जयन्तमज्म प्रमृणन्तमोजसा ।
इमं सजाता अनु वीरयध्वमिन्द्रं सखायो अनु सं रभध्वम् ॥ ३ ॥

( ३ )

ऋषिः—अप्रतिरथ ऐन्द्रः ॥ देवता—इन्द्रः ॥ छन्दः—त्रिष्टुप् ॥ स्वरः—धैवतः ॥

१८५५. अभि गोत्राणि सहसा गाहमानोऽदयो वीरः शतमन्युरिन्द्रः ।
दुश्च्यवनः पृतनाषाडयुध्यो३ऽस्माकं सेना अवतु प्र युत्सु ॥ १ ॥

१८५६. इन्द्र आसां नेता बृहस्पतिर्दक्षिणा यज्ञः पुर एतु सोमः ।
देवसेनानामभिभञ्जतीनां जयन्तीनां मरुतो यन्त्वग्रम् ॥ २ ॥

१८५७. इन्द्रस्य वृष्णो वरुणस्य राज्ञ आदित्यानां मरुतां शर्ध उग्रम्।
महामनसां भुवनच्यवानां घोषो देवानां जयतामुदस्थात् ॥ ३ ॥

( ४ )

ऋषिः—अप्रतिरथ ऐन्द्रः ॥ देवता—इन्द्रः ॥ छन्दः—त्रिष्टुप् ॥
स्वरः—धैवतः ॥

१८५८. उद्धर्षय मघवन्नायुधान्युत् सत्वनां मामकानां मनांसि ।
उद् वृत्रहन् वाजिनां वाजिनान्युद्रथानां जयतां यन्तु घोषाः ॥ १ ॥

१८५९. अस्माकमिन्द्रः समृतेषु ध्वजेष्वस्माकं या इषवस्ता जयन्तु।
अस्माकं वीरा उत्तरे भवन्त्वस्माँ उ देवा अवता हवेषु ॥ २ ॥

१८६०. असौ या सेना मरुतः परेषामभ्येति न ओजसा स्पर्धमाना ।
तां गूहत तमसापव्रतेन यथैतेषामन्यो अन्यं न जानात् ॥ ३ ॥

( ५ )

ऋषिः—१-२ अप्रतिरथ ऐन्द्रः; ३ पायुर्भारद्वाजः ॥ देवता—१ अप्वा; २ इन्द्रो मरुतो वा; ३ इषवः ॥ छन्दः—१ त्रिष्टुप्; २-३ अनुष्टुप् ॥ स्वरः—१ धैवतः;
२-३ गान्धारः ॥

१८६१. अमीषां चित्तं प्रतिलोभयन्ती गृहाणाङ्गान्यप्वे परेहि ।
अभि प्रेहि निर्दह हृत्सु शोकैरन्धेनामित्रास्तमसा सचन्ताम् ॥ १ ॥

१८६२. प्रेता जयता नर इन्द्रो वः शर्म यच्छतु ।
उग्रा वः सन्तु बाहवोऽनाधृष्या यथासथ ॥ २ ॥

१८६३. अवसृष्टा परा पत शरव्ये ब्रह्मसंशिते ।
गच्छामित्रान् प्र पद्यस्व मामीषां कं च नोच्छिषः ॥ ३ ॥

( ६ )

ऋषिः—पायुर्भारद्वाजः ॥ देवता—१-२ इन्द्रः; ३ संग्रामाशिषः ॥ छन्दः—१ त्रिष्टुप्;
२ अनुष्टुप्; ३ पङ्क्तिः ॥ स्वरः—१ धैवतः; २ गान्धारः; ३ पञ्चमः ॥

१८६४. कङ्काः सुपर्णा अनु यन्त्वेनान् गृध्राणामन्नमसावस्तु सेना ।
मैषां मोच्यघहारश्च नेन्द्र वयांस्येनाननुसंयन्तु सर्वान् ॥ १ ॥

१८६५. अमित्रसेनां मघवन्नस्माञ्छत्रुयतीमभि ।
उभौ तामिन्द्र वृत्रहन्नग्निश्च दहतं प्रति ॥ २ ॥

१८६६. यत्र बाणाः सम्पतन्ति कुमारा विशिखाइव ।
तत्र नो ब्रह्मणस्पतिरदितिः शर्म यच्छतु विश्वाहा शर्म यच्छतु ॥ ३ ॥

( ७ )

ऋषिः—शासो भारद्वाजः ॥ देवता—इन्द्रः ॥ छन्दः—१-२ अनुष्टुप्; ३ विराड् जगती ॥ स्वरः—१-२ गान्धारः; ३ निषादः ॥

१८६७. वि रक्षो वि मृधो जहि वि वृत्रस्य हनू रुज ।
वि मन्युमिन्द्र वृत्रहन्नमित्रस्याभिदासतः ॥ १ ॥

१८६८. वि न इन्द्र मृधो जहि नीचा यच्छ पृतन्यतः ।
यो अस्माँ अभिदासत्यधरं गमया तमः ॥ २ ॥

१८६९. इन्द्रस्य बाहू स्थविरौ युवानावनाधृष्यौ सुप्रतीकावसह्यौ ।
तौ युञ्जीत प्रथमौ योग आगते याभ्यां जितमसुराणां सहो महत् ॥ ३ ॥

( ८ )

ऋषिः—शासो भारद्वाजः ॥ देवता—संग्रामाशिषः ॥ छन्दः—१ त्रिष्टुप्; २ अनुष्टुप्; ३ पङ्क्तिः ॥ स्वरः—१ धैवतः; २ गान्धारः; ३ पञ्चमः ॥

१८७०. मर्माणि ते वर्मणा च्छादयामि सोमस्त्वा राजामृतेनानु वस्ताम् ।
उरोर्वरीयो वरुणस्ते कृणोतु जयन्तं त्वानु देवा मदन्तु ॥ १ ॥

१८७१. अन्धा अमित्रा भवताशीर्षाणोऽहयइव ।
तेषां वो अग्निनुन्नानामिन्द्रो हन्तु वरंवरम् ॥ २ ॥

१८७२. यो नः स्वोऽरणो यश्च निष्ट्यो जिघांसति ।
देवास्तं सर्वे धूर्वन्तु ब्रह्म वर्म ममान्तरं शर्म वर्म ममान्तरम् ॥ ३ ॥

( ९ )

ऋषिः—१ जय ऐन्द्रः; २-३ गोतमो राहूगणः ॥ देवता—१ इन्द्रः; २-३ विश्वेदेवाः ॥ छन्दः—१-२ त्रिष्टुप्; ३ विराट्स्थाना त्रिष्टुप् ॥ ॥ स्वरः—धैवतः ॥

१८७३. मृगो न भीमः कुचरो गिरिष्ठाः परावत आ जगन्था परस्याः ।
सृकं संशाय पविमिन्द्र तिग्मं वि शत्रून् ताढि वि मृधो नुदस्व ॥ १ ॥

१८७४. भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेमहि देवहितं यदायुः ॥ २ ॥

१८७५. स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ।
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ।
स्वस्ति नो बृहस्पतिर्दधातु ॥ ३ ॥

इत्येकविंशोऽध्यायः, नवमप्रपाठकश्च समाप्तः ॥

इत्युत्तरार्चिकः ॥

इति सामवेदसंहिता ॥

# सामवेद-मन्त्रानुक्रमणिका

**ब**



**भ**